॥ ॐ अर्हँ नमः ॥

॥ संकलस्वपरसमयाब्धिपारीण-शासनसम्राट्-सूरिचक्रचक्रवर्त्ति-श्रीतपागच्छनभोनभोमणि-भट्टारकाचार्य-

श्रीविजयनेमिसूरीश्वरसद्गुरुभ्यो नमः ॥

तत्पट्टालंकाराऽयात-न्यायवाचस्पति-शास्त्रविशारदोपनाम-श्रीतपागच्छभट्टारकाचार्यश्रीविजयदर्शनसूरिप्रणीता

# ॥ श्रीपर्युषणपर्वकल्पलता ॥



श्रीसूर्यपुर(सुरत)नवापरावासि-श्रेष्ठिवर्य-मगनलाल देवचन्द-संग्रामपरावासि-श्रेष्ठिवर्य-गांडाभाइ

विठ्ठलदास इत्याख्यश्राद्धवर्यद्वयसमर्पितद्रव्यसाहाय्येन—

प्रकाशकः-श्रीराजनगरस्थश्रीजैनग्रन्थप्रकाशकसभाकार्यवाहकः श्रेष्ठि-मूलचन्द्रात्मज-ईश्वरदासः

वीरसंवत् २४६१ प्रतयः ७५०—काश्मीरीयपत्रे २० प्रथमावृत्तिः विक्रमाब्दः १९९१

एतद्ग्रन्थकारप्रणीतग्रन्थनामानि—

मुद्रितानि

१ स्याद्वादबिन्दुः ।

२ ( खण्डनखाद्य ) श्रीमहावीरस्तवकल्पलताटीका ।

३ श्रीपर्युषणपर्वकल्पप्रभा–न्याययुक्तिगर्भा ।

४ श्रीपर्युषणपर्वकल्पलता ।

रच्यमाना

५ उपा० श्रीयशोविजयजीमहा० कृततत्त्वार्थप्रथमाध्यायटीकाविवृतिः ।

## ॥ श्रीपर्युषणापर्वकल्पलताशुद्धिपत्रकम् ॥

| अशुद्धम् | शुद्धम् | पत्रम् | पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् | पत्रम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|---|---|---|---|---|---|
| यद्री | यद्रि | १ | १ | ८ | जह | जइ | १७ | १ | ५ |
| व्याध्युपाधीः | व्याध्युपाधीन् | ४ | १ | १ | दर्शनछद्मना | दर्शनदम्भतो | १८ | १ | ६ |
| तेस्त्यज | ते त्यज | ६ | २ | १३ | यथेपं | यथेष्टं | १९ | १ | १० |
| चारिणं | चारिणो | ८ | २ | १४ | ऽह्वरहोऽभयं तं | ऽभयमन्वहं तम् | २१ | १ | १३ |
| मे लक्ष | मछक्ष | ९ | २ | २ | ऽऽनतरसः | माननाम | ३१ | २ | १० |
| रमा | धधू | १० | १ | ८ | मित्या– | मित्य– | ३२ | २ | ५ |
| नामयति | शाम्यति | १३ | २ | १४ | पर्वी । | पर्वीम् । | ३३ | १ | ७ |

स्वातीतुल्ये मुहूर्त्ते प्रणतजनगणाभीष्टदे शुक्तिकाभे, श्रीमन्नेमेर्गुरोर्मे स्वपरप्रवचनाम्भोधिरूपस्य सूरेः ।
हस्ताम्भोजेऽर्पितं सजलधरजलवद् भक्तिमार्चैर्मयेदम्, मुक्तातुल्यं हि धत्ते नृहृदि सुरचितं किन्न भूपासपद्यम् ॥१॥
चञ्चाङ्गा इव क्षीरपानरसिकास्सन्तो गुणग्राहिणो, नो काका इव पूतिगन्धनिरता दोषोत्करान्वेषिणः ।
इत्यालोच्य मदीयनिर्मितिमिमां संशोधयिष्यन्ति नो, धास्यन्ते हृदि दोषलेशमपि ये तान् संस्तुमोऽहर्निशम् ॥ २ ॥

॥ ॐ ह्रीँ अर्हँ नमः ॥

॥ ऐदंयुगीनशासनाधिपतित्रिलोकीपतिसर्वज्ञप्रभुश्रीमहावीरस्वामिने नमः ॥

॥ अखण्डभूमण्डलव्याप्तमिथ्यात्वध्वान्तभानवेऽनल्पलब्धिमाणिक्यमालिने श्रीगौतमस्वामिने नमः ॥

॥ न्यायव्याकरणसिद्धान्तादिपाथोध्यवगाहावाप्तभूरितत्त्वरत्नसङ्कलितानेकग्रन्थमालेभ्यः श्रीतपागच्छपूर्वाचलभानुभ्यः शासनसम्राड्–भट्टारकाचार्यश्रीविजयनेमिसूरीश्वरसद्गुरुभ्यो नमः ॥

तत्पट्टविभूषणावाप्त–न्यायवाचस्पति-सिद्धान्तविशारदोपनाम–तपागच्छीयभट्टारकाचार्यश्रीविजयदर्शनसूरिप्रणीता

# ॥ श्रीपर्युषणपर्वकल्पलता ॥



श्रीमङ्गला-चरणम् ।

यद्गीस्सुधास्वादनतो मनुष्याः, सम्प्राप्नुवन्त्याश्वजरामरत्वम् ।
यन्नामगोत्रश्रुतिरप्यशंहा, वीरप्रभुं तं भविका भजध्वम् ॥ १ ॥
युष्मत्सुधादृष्टिसुसेकतोऽस्मिन्, पर्वण्यनेकेऽमृततामवाप्ताः ।
द्राह्मादृशाङ्गेषु विभो ! सुधादृक्–सेकं कुरुष्वामृतता यतस्स्यात् ॥ २ ॥

श्रुत्वा वरं पर्युषणीयतत्त्वं, सम्यक् च धृत्वा हृदि चोपसेव्य ।
कुशाग्रबुद्ध्या सततं त्रियोग-सद्भक्तिभावोग्रतपोव्रताद्यैः ॥ ३ ॥
सिध्यन्ति सुज्ञाश्च भवाष्टमध्ये, तद्वर्णने भव्यजनाब्जभानुः ।
श्रीनेमिसूरिर्हृतभव्यतापो, हृत्पङ्कजं मे विकचीकरोतु ॥ ४ ॥ युग्मम् ।

सर्वपर्वोत्तमं श्रीपर्युषण-पर्ववेत्युपमाप्रदर्शनेन प्रदर्शनम् ।

अथार्हत्प्रभुशासनेऽनल्पभवदुष्टाध्यवसायकृतदुष्कर्ममर्मभेदविषमाचलपक्षपातवज्राभिघातसमं, मोह-भोगतृष्णादिसर्पविषोत्तारे जाङ्गुलीमन्त्रायमाणं, संसारसागरे निमज्जज्जीवपोतस्य ज्ञानचरणजलोपरितलं प्रापयत्, संवेगनिर्वेदवैराग्यधैर्यक्षमाविवेकादिगुणरूपसमुद्रोल्लासे चन्द्रोपमम्, अनन्तभवभावामयनिनाशयिषूणां दिव्यौषधं, सम्यग्दृशां सुधाञ्जनं श्रीपर्युषणपर्वैव । सर्वपर्वस्वेतदेव शिरोमणिभावं बिभर्त्ति, उक्तं च–

"मन्त्राणां परमेष्ठिमन्त्रमहिमा तीर्थेषु शत्रुञ्जयो, दाने प्राणिदया गुणेषु विनयो ब्रह्म व्रतेषु व्रतम् ।
सन्तोषो नियमे तपस्सु च शमस्तत्त्वेषु सद्दर्शनं, सर्वज्ञोदितसर्वपर्वसु परं स्याद् वार्षिकं पर्व च ॥ १ ॥"

इति । नन्वेतत्पर्वमाहात्म्यं केनापि वर्णयितुं शक्यं न वेति चेत्, उच्यते–

स्याद् बिन्दुसङ्ख्या जलधेः कदाचित्, गण्या च गङ्गातटरेणुसङ्ख्या । ॥ १ ॥
तथापि वाचस्पतिनाऽपि पर्व-माहात्म्यसङ्ख्या न कदापि गण्या ॥ १ ॥ इति ।

दयां विना धर्मः, तपसा विना महर्षिः, गन्धहीनं कुसुममित्यादिवदेतत्पर्वाराधनं विना नैवाऽर्हतश्शोभते,

सुशोभते च शीलेन कुलवधूः, ज्ञानेन सूरिरित्यादिवदेतत्पर्वं सम्यगाराधनेनैव, एतत्पर्वणि समागते सति विषय-विषमूर्च्छिता अपि समग्रदेवदानवेन्द्रास्स्वस्वपरिवारयुताः कज्जलगृहं यथा न वस्त्रशुद्धिकारकं तथाऽऽधिव्याधि-सोपाधिक्षेत्रं नात्मशुभपरिणामकारणम्, किन्तु—

'उदय-क्खय-क्खयोवसमोवसमा एवत्थ कम्मुणो भणिया। दव्वं खित्तं कालं, भावं च भवं च संपप्प ॥ १ ॥

इति सिद्धान्तोक्तेर्जैनप्रवचने तीर्थभूम्यादिरूपशुभक्षेत्रादिकमेव, कर्मक्षय-क्षयोपशमादिहेतुत्वात् तस्येति मत्वा श्रीनन्दीश्वरनाम्नि शश्वत्सुपमाधाम्नि धर्मैकधाम्नि चाष्टमद्वीपे धर्ममहिमानं कर्तुं गच्छन्ति। उक्तं च श्रीजीवाभिगमे—"[2]तत्थ णं बहवे भवणवइ-वाणमन्तर-जोतिसिय-वेमाणिया देवा चाउम्मासियापडिवएसु संवच्छरिएसु य अण्णेसु बहूसु जिणजम्मण-णिक्खमण-णाणुप्पत्ति-परिणिव्वाणमादिएसु य देवकज्जेसु य देवसमुदएसु य देवसमितिसु य देवसमवाएसु य देवपओयणेसु य एगंतओ सहिता समुवागता समाणा पमुदित-पक्कीलिया अट्ठाहितारूवाओ महामहिमाओ करेमाणा पालेमाणा सुहं सुहेणं विहरंति" इति।

१ उदय-क्षय-क्षयोपशमोपशमा एवात्र कर्मणो भणिताः। द्रव्यं क्षेत्रं कालं भावं च भवं च सम्प्राप्य ॥ १ ॥

२ तत्र बहवो भवनपति-वानमन्तर-ज्योतिषिक-वैमानिका देवाश्चातुर्मासिकप्रतिपत्सु सांवत्सरिकेषु चाऽन्येषु बहुषु जिनजन्म-निष्क्रमण-ज्ञानोत्पत्ति-परिनिर्वाणादिकेषु च देवकार्येषु च देवसमुदायेषु च देवसमितिषु च देवसमवायेषु च देवप्रयोजनेषु चैकान्ततः सहितास्समुपागतास्सन्तः प्रमुदित-प्रक्रीडिता अष्टाह्निकारूपा महामहिमाः कुर्वाणाः पालयमानास्सुखं सुखेन विहरन्ति।

चतुर्निकायदेवानां श्रीपर्युषणपर्वणि श्रीनन्दीश्वरतीर्थगमने हेतुप्रदर्शनम्, तत्र सिद्धान्तपाठप्रदर्शनं च

नन्दीश्वरद्वीपे द्विपञ्चाशज्जिनचैत्यानि यथा-सन्ति तथा सिद्धान्तोक्तिपुरस्सरं प्रदर्शनम् ।

ननु नन्दीश्वरद्वीपे कियन्ति शाश्वतजिनचैत्यानि सन्तीति चेत्, द्विपञ्चाशत्, तथाहि-

नन्दीश्वरद्वीपस्य मध्यभागे चतुर्दिक्षु चत्वारः कृष्णरत्नविशेषमया अञ्जनगिरिपर्वताः, एकैकाञ्जनगिरेश्चतुर्दिक्षु चतस्रो वाप्यः, सङ्कलिताः षोडश वाप्यः, एकैकवापीमध्यभागे दुग्धदध्यादिवत् श्वेतवर्णैकैकदधिमुखपर्वतसद्भावात् तेऽपि षोडश, द्वयोर्द्वयोर्वाप्योरन्तराले द्वौ द्वौ पद्मरागनिभौ रतिकरपर्वतौ, ते च संमिलिता द्वात्रिंशत्, एवं चैकैकस्यां दिशि एकैकोऽञ्जनगिरिः, चत्वारो दधिमुखपर्वताः, अष्टौ रतिकरपर्वताः, मिलितास्त्रयोदश। उक्तं च प्रवचनसारोद्धारे-"[1]अंजणगिरिपमुहं गिरितेरसगं विज्जइ चउदिसिं पि" इति, चतुर्भिर्गुणिता द्विपञ्चाशद् गिरयः। तत्र च द्विपञ्चाशज्जिनचैत्यानि। उक्तं च स्थानाङ्गवृत्तौ-

"[2]अंजणगाइगिरीणं णाणामणिपज्जलंतसिहरेसु। बावन्नं जिणणिलया मणिरयणसहस्सकूडवरा ॥१॥" इति।

तत्र चतुर्निकायदेवा भक्तिभरोल्लसितमानसाः संभूय ऋषभ-वर्द्धमान-चन्द्रानन-वारिषेणाख्यशाश्वतजिनबिम्बानि प्रतिमन्दिरमष्टोत्तरशतमितानि पञ्चधनुश्शतसमुच्छ्रितानि जल-चन्दनाद्यष्टद्रव्यैः पूजयन्ति, अपुनरुक्तत्वादिगुणान्वितोष्टोत्तरशतवृत्तैर्जिनगुणान् गायन्ति, नाटकादिकं च विदधति। नन्वत्र चातुर्मासि-

१ अञ्जनगिरिप्रमुखं गिरित्रयोदशकं विद्यते चतुर्दिक्ष्वपि।

२ अञ्जनकादिगिरीणां नानामणिप्रज्वलच्छिखरेषु। द्विपञ्चाशज्जिननिलया मणिरत्नसहस्रकूटवराः ॥ १ ॥

कादिपर्वदिनेष्वन्यदिनेषु पूजादिनिमित्तं चतुर्विधदेवनिकायस्समागच्छति न वेति चेत्, समागच्छत्येव, नैव कदाऽप्यपूजितानि तान्यवतिष्ठन्ते । उक्तं च प्रवचनसारोद्धारे–

"इय सासयगिरीसर–सिहरट्ठियवीयरायबिम्बाणं । पूयणकए चउविह–देवनिकाओ समेइ सया ॥१॥" इति ।

एवमर्हद्धर्मानुरक्ताः श्रावका अपि येऽधःकृतकल्पद्रु-चिन्तामणिरत्नादिके श्रीपर्युषणपर्वणि समागते विशेषतो भक्तिभावेनाष्टाह्निकामहोत्सवं कुर्वन्ति ते भवाष्टकमध्येऽनन्तज्ञानादिचतुष्टयलक्ष्मीमवाप्नुवन्ति । यदुक्तम्–

"अष्टाह्निकादिमहिमा जिनपुङ्गवानां, कुर्वन्ति ये सुकृतिनः कृतिनः सुभक्त्या ।
कर्माष्टकं जगति ते हि भवाष्टकस्य, मध्ये विधूय शिवदं शिवधाम यन्ति ॥ १ ॥"

अथ महामोहान्धकारविलुप्तसत्पथे संसारे निवसतां प्राणिनां भगवता केवलज्ञानालोकेन श्रेयोमार्गतया प्रदर्शिते श्रीपर्युषणापर्वणि श्रावकैर्यत्समाचरणीयं तदाह–

आचारसाष्टकसुपौषधमग्नचित्तै–स्त्यक्ताश्रवैः प्रशमरुद्धकषायवर्गैः ।
श्रीकल्पसूत्रसविधिश्रवणैकतानै–राराधना जिनमतोन्नतिकाऽत्र कार्या ॥ १ ॥

नन्दीश्वरद्वीपे शाश्वतजिनप्रतिमापूजनार्थं किमन्यदिनेष्वपि देवास्समागच्छन्तीति शङ्कोद्धारः।

पर्युषणे श्रावकैर्यदाचरणीयं तत्प्रदर्शनम्

---

१ इति द्विपश्चाशद्गिरीश्वरशिखरस्थितवीतरागबिम्बानाम् । पूजनकृते चतुर्विधदेवनिकायः समेति सदा ॥ १ ॥

श्रीनन्दीश्वरद्वीपे द्विपञ्चाशज्जिनचैत्यानि यथासन्ति तथा सिद्धान्तोक्तिपुरस्सरं प्रदर्शनम् ।

नन्नु नन्दीश्वरद्वीपे कियन्ति शाश्वतजिनचैत्यानि सन्तीति चेत्, द्विपञ्चाशत्, तथाहि–

नन्दीश्वरद्वीपस्य मध्यभागे चतुर्दिक्षु चत्वारः कृष्णरत्नविशेषमया अञ्जनगिरिपर्वताः, एकैकाञ्जनगिरेश्चतुर्दिक्षु चतस्रो वाप्यः, सङ्कलिताः षोडश वाप्यः, एकैकवापीमध्यभागे दुग्धदध्यादिवत् श्वेतवर्णैकैकदधिमुखपर्वतसद्भावात् तेऽपि षोडश, द्वयोर्द्वयोर्वाप्योरन्तराले द्वौ द्वौ पद्मरागनिभौ रतिकरपर्वतौ, ते च संमिलिता द्वात्रिंशत्, एवं चैकैकस्यां दिशि एकैकोऽञ्जनगिरिः, चत्वारो दधिमुखपर्वताः, अष्टौ रतिकरपर्वताः, मिलितास्त्रयोदश। उक्तं च प्रवचनसारोद्धारे–"[1]अंजणगिरिपमुहं गिरितेरसगं विज्जइ चउदिसिं पि" इति, चतुर्भिर्गुणिता द्विपञ्चाशद् गिरयः। तत्र च द्विपञ्चाशज्जिनचैत्यानि। उक्तं च स्थानाङ्गवृत्तौ–

"[2]अंजणगाइगिरीणं णाणामणिपज्जलंतसिहरेसु। बावन्नं जिणणिलया मणिरयणसहस्सकूडवरा ॥१॥" इति।

तत्र चतुर्निकायदेवा भक्तिभरोल्लसितमानसाः संभूय ऋषभ-वर्द्धमान-चन्द्रानन-वारिषेणाख्यशाश्वतजिनबिम्बानि प्रतिमन्दिरमष्टोत्तरशतमितानि पञ्चधनुश्शतसमुच्छ्रितानि जल-चन्दनाद्यष्टद्रव्यैः पूजयन्ति, अपुनरुक्तत्वादिगुणान्विताष्टोत्तरशतवृत्तैर्जिनगुणान् गायन्ति, नाटकादिकं च विदधति। नन्वत्र चातुर्मासि-

॥ २ ॥

१ अञ्जनगिरिप्रमुखं गिरित्रयोदशकं विद्यते चतुर्दिक्ष्वपि ।
२ अञ्जनकादिगिरीणां नानामणिप्रज्वलच्छिखरेषु । द्विपञ्चाशज्जिननिलया मणिरत्नसहस्रकूटवराः ॥ १ ॥

कादिपर्वदिनेष्वियान्यदिनेषु पूजादिनिमित्तं चतुर्विधदेवनिकायस्समागच्छति न वेति चेत्, समागच्छत्येव, नैव कदाऽप्यपूजितानि तान्यवतिष्ठन्ते । उक्तं च प्रवचनसारोद्धारे–

[1]"इय बावन्नगिरीसर–सिहरट्ठियवीयरायबिम्बाणं । पूयणकए चउविह–देवनिकाओ समेइ सया ॥१॥" इति ।

एवमर्हद्धर्मानुरक्ताः श्रावका अपि येऽधःकृतकल्पद्रु-चिन्तामणिरत्नादिके श्रीपर्युषणपर्वणि समागते विशेषतो भक्तिभावेनाष्टाह्निकामहोत्सवं कुर्वन्ति ते भवाष्टकमध्येऽनन्तज्ञानादिचतुष्टयलक्ष्मीमवाप्नुवन्ति । यदुक्तम्–

"अष्टाह्निकादिमहिमा जिनपुङ्गवानां, कुर्वन्ति ये सुकृतिनः कृतिनः सुभक्त्या ।
कर्माष्टकं जगति ते हि भवाष्टकस्य, मध्ये विधूय शिवदं शिवधाम यन्ति ॥ १ ॥"

अथ महामोहान्धकारविलुप्तसत्पथे संसारे निवसतां प्राणिनां भगवता केवलज्ञानालोकेन श्रेयोमार्गतया प्रदर्शिते श्रीपर्युषणापर्वणि श्रावकैर्यत्समाचरणीयं तदाह–

आचामसराष्टकसुपौषधमग्नचित्तै–स्त्यक्ताश्रवैः प्रशमरुद्धकषायवर्गैः ।
श्रीकल्पसूत्रसविधिश्रवणैकतानै–राराधना जिनमतोन्नतिकाऽत्र कार्या ॥ १ ॥

नन्दीश्वरद्वीपे शाश्वतजिनप्रतिमापूजनार्थं किमन्यदिनेष्वपि देवास्समागच्छन्तीति शङ्कोद्धारः।

पर्युषणे श्रावकैर्यदाचरणीयं तत्प्रदर्शनम्

---

१ इति द्विपञ्चाशद्गिरीश्वरशिखरस्थितवीतरागबिम्बानाम् । पूजनकृते चतुर्विधदेवनिकायः समेति सदा ॥ १ ॥

अथ यद्यपि "[1]कया णमहमप्पं वा बहुयं वा परिग्गहं परिचइस्सामि ? ॥ १ ॥ कया णं अहं मुंडे भवित्ता अगारातो अणगारितं पव्वइस्सामि ? ॥ २ ॥ कया णं अहं अपच्छिममारणंतियसंलेहणाझूसणाझूसिते भत्त-पाणपडियातिक्खिते पाओवगते कालं अणवकंखमाणे विहरिस्सामि ? ॥ ३ ॥" इत्यादि सूत्रोक्तभावनां भावयताऽपि मया चारित्रमोहनीयोदयप्राबल्यादेव नैवाद्यावधि–

"[2]तणसंथारनिसण्णो वि मुणिवरो भट्ठराग-मय-मोहो । जं पावइ मुत्तिसुहं, तं कत्तो चक्कवट्टी वि ?" ॥ १ ॥

इति महर्षिवचनाचक्रवर्तिसुखातिशायिचारित्ररत्नं लब्धं तथापि सर्वकल्याणैककारणस्य पर्युषणपर्वणस्त्रिकरणयोगेनाराधनमेव लोकत्रये सारभूतमन्यत् सर्वमनर्थमूलमिति बुद्ध्या भोगतृष्णालतोच्छेदे कुठारकल्पं विवेकं च कृत्वा–

"[3]सामाइय-पोसहसंठियस्स(सुट्ठियस्स) जीवस्स जाइ जो कालो । सो सफलो बोद्धव्वो, सेसो संसारफलहेऊ" ॥१॥

---

१ कदा अहमल्पं वा बहुकं वा परिग्रहं परित्यक्ष्यामि ॥ १ ॥ कदाऽहं मुण्डो भूत्वाऽगारादनगारितां प्रव्रजिष्यामि ॥ २ ॥ कदा अहमपश्चिममारणान्तिकसंलेखनाजोषणाजुष्टो भक्तपानप्रत्याख्यातः पादपोपगतः कालमनवकाङ्क्षमाणो विहरिष्यामि ॥ ३ ॥

२ तृणसंस्तारनिषण्णोऽपि मुनिवरो भ्रष्टराग-मद-मोहः । यत् प्राप्नोति मुक्तिसुखं तत् कुतश्चक्रवर्त्यपि ? ॥ १ ॥

३ सामायिक-पौषधसंस्थितस्य(सुस्थितस्य) जीवस्य याति यः कालः । स सफलो बोद्धव्यः, शेषस्संसारफलहेतुः ॥ १ ॥

अष्टदिनावधि पौषधग्रहणेन पर्युषणपर्वाराधनाऽधिकारः ।

इति सिद्धान्तोक्तेः पौषधादिधर्मकालस्यैव च सफलत्वं मत्वाऽष्टदिनावधि सर्वाधि-व्याध्युपाधीः परित्यज्य मुख्यवृत्त्या पौषधव्रतं गृहीत्वैव त्रिकरणयोगेनैतत्पर्युषणपर्व समाराधनीयं प्रत्येकश्रमणोपासकेन । उक्तं च–

'पव्वेसु पोसहाइ-धम्म-अणारम्भ-तवविसेसाई । आसोअ-चित्तअट्ठाहिअ-पज्जोसणेसु विसेसेणं ॥ १ ॥

सो य तवो सव्वासु वि, तिहिसु गिहिणो वि होइ करणिज्जो । तह अतरन्तो नियमा हविज्ज पव्वेसु पोसहिओ ॥२॥

पर्युषणसमं च नान्यत् पर्व इत्याशयेनाह–आवासराष्टकसुपौषधमग्नचित्तैरिति ।

अङ्गीकृतपौषधव्रतस्तदीयसर्वक्रियामुपयोगपुरस्सरमेव कुर्यात्, येनासङ्ख्यभवीयकर्म नश्येत्, उक्तं च–
"कम्ममसंखेज्जभवं खवेइ अणुसमयमेव उवउत्तो" इति । दिवसे नैव निद्रां कुर्यात्, निश्यपि-निद्रामल्पां कुर्यात्, यतोऽल्पनिद्रत्वं महानुभावलक्षणं, यदार्षम्–
"थोवाहारो थोवभणिओ अ जो होइ थोवनिद्दो अ । थोवोवहि-उवगरणो तस्स हु देवा वि पणमंति" ॥१॥ इति

पौषधे प्रमादो नैव कर्त्तव्य इत्यधिकारः ।

---

१ पर्वसु पौषधादि-स्नानानारम्भ-तपोविशेषादि । आश्विन-चैत्राष्टाह्निक-पर्युषणेषु विशेषेण ॥ १ ॥
तच्च तपस्सर्वास्वपि तिथिषु गृहिणोऽपि भवति करणीयम् । तथाऽशक्नुवन् नियमाद् भवेत् पर्वसु पौषधिकः ॥ २ ॥

२ कर्मासंख्येयभवं क्षपयत्यनुसमयमेवोपयुक्तः ।

३ स्तोकाहारः स्तोकभणितश्च यो भवति स्तोकनिद्रश्च । स्तोकोपध्युपकरणस्तं खलु देवा अपि प्रणमन्ति ॥ १ ॥

अह न सक्केइ काउं एगभु(भ)त्तं जओ गिही (सया पुणो)। दिवससस्सट्ठमे भागे, तओ भुंजे सुसावओ ॥३॥"[1] इत्युक्तेश्च सर्वदा सर्वसचित्ताहार-रात्रिभोजनपरित्यागः कर्तव्यः, सर्वदा तदशक्तावपि श्रीपर्युषणपर्वणि तु स कर्तव्य एव।

स्नानादि-त्यागोपदेशः।

एतेन "लशुनं पलाण्डुः करभीक्षीरं गोमांसं मद्यं चेत्येतत्पञ्चकवर्जनेन मोक्षं केचित् प्रवदन्ति" इत्येतन्मतमपि निरस्तम्, तद्वदन्यसर्वसचित्तवस्त्वाहारे जीवहिंसासद्भावेन तत्त्यागस्यैव मोक्षकारणत्वात्। सचित्तोदकपानमपि नैव कर्तव्यम्। अस्मिन् महापर्वणि यथा पापारम्भो न स्यात् तथा प्रयतितव्यम्, तैलिक-लोहकार-भ्राष्ट्रकर्मकारक-कैवर्त्तादीनां प्रेमोत्पादकवचनपुरस्सरं धनादिवितरणं कृत्वा देशनगरादिमध्येऽमारिघोषणा कारयितव्या। न च घातकादिभ्यो धनार्पणं शास्त्रनिषिद्धं जीवान्तरघातकारणत्वादिति वाच्यम्, [2]"तेसिं पि घायगाणं, दायव्वं सामपुव्वगं दाणं। तत्तियदिणाण उचियं, कायव्वा देसणा य सुहा" ॥१॥ इति नवमपञ्चाशके प्रोक्तत्वात्। प्रभुशासने हि शुभाशुभपरिणाम एव शुभाशुभकर्मबन्धकारणमिति जीवान्तरघातकपरिणामाभावेनाष्टदिनावधि जीवरक्षणैकपरिणामेन च घातकधनार्पणस्यापि शुभावहत्वात्। एवं क्रियमाणे को गुण

येन केन प्रकारेण पर्युषणेऽमारिघोषणा कर्त्तव्येत्युपवर्णनम् ॥ ५ ॥

१ अथ न शक्नोति कर्तुं एकभु(भ)क्तं यतो गृही (सदा पुनः) दिवसस्याऽष्टमे भागे ततो भुञ्जीत सुश्रावकः ॥ ३ ॥

२ तेभ्योऽपि घातकेभ्यो दातव्यं सामपूर्वकं दानम्। तावद्दिनानामुचितं कर्तव्या देशना च शुभा ॥ १ ॥

इति चेत्, उच्यते-जिनप्रवचनस्य श्लाघा लोके भवति, केषाञ्चिल्लघुकर्मणां सम्यग्दर्शनप्राप्तिः, पुनरन्येषां जिनशासनपक्षपातरूपशुभाध्यवसायलक्षणस्य सम्यग्दर्शनबीजस्य लाभः । तदुक्तम्—

"'तित्थस्स वण्णवाओ, एवं लोगम्मि बोहिलाभो य । केसिंचि होइ परमो, अन्नेसिं बीयलाभो त्ति" ॥१॥

अभयदानप्राधान्यख्यापनार्थं कथानकं चैवम्—

अभयदानप्राधान्यख्यापनार्थं सप्तराज्ञीदृष्टान्तः

आसीत् पुरा शङ्खपुरे नरेन्द्रः, शङ्खाभिधस्सज्यजितारिवर्गः ।
अतीवदक्षाः परदुःखभङ्गे, पत्न्यो बभूवुः किल तस्य सप्त ॥ १ ॥
अथैकदा चौर इलेशकोशाद् रत्नादिपेटां निशि सञ्जहार ।
तत्पृष्ठयातैस्सुभटैस्स नीतो, नृपस्य पार्श्वं दृढबन्धबद्धः ॥ २ ॥
नृपाज्ञया सैन्यनरैर्वधार्थं, स नीयते बद्धकरोऽश्रुपातः ।
कृपैकपात्रो धृतरक्तवस्त्रः, भीकम्पिताङ्गो गलरक्तमालः ॥ ३ ॥

"ये दीनेषु दयालवस्स्पृशति यानल्पोऽपि न श्रीमदो, व्यग्रा ये च परोपकारकरणे हृष्यन्ति ये याचिताः ।
स्वस्थास्सन्ति च यौवनोन्मदमहाव्याधिप्रकोपेऽपि ये, तैस्स्तम्भैरिव सुस्थितैः कलिभरक्लान्ता धरा धार्यते ॥१॥"

---

१ तीर्थस्य वर्णवाद एवं लोके बोधिलाभश्च । केषाञ्चिद् भवति परमोऽन्येषां बीजलाभ इति ॥ १ ॥

इत्थं महर्ष्युक्तिसुधासुपाने, रक्ता मुदा रूपवतीमुखास्ताः ।
पप्रच्छुरालोक्य दयायुतास्तं, जगौ यथार्थं निजचौर्यवृत्तम् ॥ ४ ॥
दुःखार्त्तनृभ्यस्सुखमाशु दद्याद्, य आप्नुयात् सोऽतिसुखं परत्र ।
इत्यादिसन्नीतिसुपालनोत्काः, द्राक् प्रार्थयामासुरिलापतिं ताः ॥ ५ ॥
चौरोऽप्ययं नः करुणां विधाय, समर्प्यतां यद्दिनमेकमेकम् ।
नानाविधैर्भोज्य-विभूषणाद्यैः कश्चिच्च कुर्मो ह्युपकारमीश ! ॥ ६ ॥
नृपोऽपि तत्प्रार्थनभङ्गभीरु-स्तमार्पिपत् तास्स्वगृहं च नीत्वा ।
सुप्रेमभक्त्या विविधोपचारै-स्तत्सत्कृतिं तेनुरुदारचित्ताः ॥ ७ ॥
ताभिर्वरस्नान-सुभोज्य-पानैः, प्रस्पर्द्धिताभिर्ह्यधिकाधिकैर्द्राक् ।
सत्कारितोऽपि प्रतिवासरं स, मृत्योर्भयात् क्षीणतनुर्बभूव ॥ ८ ॥
दृष्ट्वा कृशं रूपवती तमूचे, भो ! भोज्यमानोऽप्यबलः कथं त्वम् ? ।
स्तेनो जगौ मृत्युभयान्मृगेन्द्र-भयान्मृगस्येव वपुः कृशं मे ॥ ९ ॥
प्रोवाच सा रूपवती तदा तं, चेन्मृत्युभीस्तेऽस्त्यज चौर्यमाशु ।
येनेह दुःखं नरके परत्र, न स्यात् सुखं प्रौढतमं सदा स्यात् ॥ १० ॥

अभयदान-
प्राधान्य-
ख्यापनार्थं
सप्तराज्ञी-
दृष्टान्तः ।

प्रेम्णा च जीवावधि चौर्यकर्म, तत्याज सोऽपि द्रुतमात्तबोधः ।
नम्रोक्तिसत्प्रार्थनया निवेश्य, भूपं तया शूलविमोचितस्सः ॥ ११ ॥
सर्वासु राज्ञीषु मिथोऽथ जाते, वादे विशेषोपकृतौ तु तस्य ।
विविच्य ते कोपकृतिं ततान-ति स्तेनमाहूय नृपोऽप्यपृच्छत् ॥ १२ ॥
सोऽप्यक त्वयाच्योपकृतिः कृतेश !, मे रूपवत्यैव तयाऽभयाऽऽप्तेः ।
सौख्यं तदाऽऽप्तोऽनुपमं न च प्राक्, मृत्योर्भियाऽहं ह्युपकारितोऽपि ॥ १३ ॥
उक्तञ्च-"सव्वे वि दुक्खभीरू, सव्वे वि सुहाहिलासिणो सत्ता । सव्वे वि जीवणरया, सव्वे मरणाओ बीहंति ॥१॥
परमन्नभोगदाणं, धणधन्नहिरण्णरज्जदाणं वा । न कुणइ तं मणहरिसं, जायइ जं अभयदाणाओ॥२॥" इति
मुक्तस्स राज्ञा प्रययौ स्वसद्म, श्रीरूपवत्या वचनाऽमृतासेः ।
व्रतं तृतीयं शुभभावपूर्व-माराध्य चाजीवमगाद् दिवं सः ॥ १४ ॥
प्राक् प्राप्य कस्योपकृतिं वरिष्ठां, जातोऽत्र चेत्थं स सुरस्स्मरन् द्राक् ।
स्वपूर्वजन्मावधितो विदित्वा-ऽनृणाय तच्छङ्खपुरं समागात् ॥ १५ ॥

अभयदान-प्राधान्य-ख्यापनार्थे सप्तराज्ञी-दृष्टान्तः ।

---

१ सर्वेऽपि दुःखभीरवः, सर्वेऽपि सुखाभिलाषिणस्सत्त्वाः । सर्वेऽपि जीवनरताः, सर्वे मरणाद् बिभ्यति ॥ १ ॥
परमान्नभोगदानं, धनधान्यहिरण्यराज्यदानं वा । न करोति तं मनोहर्षं, जायते योऽभयदानात् ॥ २ ॥

विशिष्य मत्वोपकृतिं प्रणम्या–ऽऽदौ रूपवत्यै वरकोटिमूल्यम् ।
हारं समर्प्यातुलकुण्डले च, स्तुत्वाऽतिभक्त्या हृदि सचकार ॥ १६ ॥
द्वे कुण्डले द्वे ललनान्तरेभ्य–स्सिंहासनोपेतमपूर्वमौलिम् ।
भूपाय दत्वा स्वरलश्चकार, सुरः स्तुता रूपवती ह्यलोकैः ॥ १७ ॥
उद्घोष्य देशेऽखिलजन्त्वभीतिं, तद्दानतो निस्स्वधनार्पणाद् राट् ।
आराध्य धर्मं प्रययुर्दिवं ते, च्युत्वाऽत्र सेत्स्यन्त्यखिला भवे वै ॥ १८ ॥
अनर्थमूलं हि यथाऽत्र लोभो, रोगस्य मूलं रसविक्रिया च ।
मूलं तथैवाखिलदर्शनानां, दया, विना तां विफलो हि धर्मः ॥ १९ ॥
एनां कथां भो भविका! विशुद्धाम्, निशम्य चोराभयदानवर्याम् ।
नित्यं यथाशक्त्यभयप्रदाने, विशेषतः पर्वसु वै यतध्वम् ॥ २० ॥

"गोपो यच्चूलशूल्यग्रे, प्रोतयूकोत्थपातकात् । अष्टोत्तरशतं वारान्, शूलिकारोपणान्मृतः ॥ १ ॥"

इति सप्तराज्ञीदृष्टान्तगोपदृष्टान्ताभ्यां सिद्धं सर्वदानेष्वभयदानं श्रेष्ठमिति ।

द्वितीयमृषावादाश्रवनिवृत्तौ मृषावचनस्येह परत्र चाऽनर्थमूलत्वात्तद्भाषी न स्यात्, किन्तु बाल्यकालादेव

द्वितीयाश्रवनिवृत्तौ मृषाभाषी न स्यात्, स्याच्च प्रियतथ्यादिभाषीत्याद्युपदेशः ।

॥ ७ ॥

सत्समागमतस्सज्जनीभूय स्वपरहितकरतथ्यप्रियमितभापी स्यात्, अत एव सततं मधुररसस्स्याद् द्राक्षावत्, पर्युषणायां तु विशेषतः, न त्विन्द्रवारुणीफलवत् कदापि मलीमसपरिणामतोऽनिष्टभापित्वेन कटुकरसस्स्यात्, परदूपणे मौनवृत्तिश्च स्यात् सततम्। उक्तं च-

"आर्योऽपि दोपान् खलवत्परेपां, वक्तुं हि जानाति परं न वक्ति।
किं काकवत्तीव्रतराननोऽपि, कीरः करोत्यस्थिविघट्टनानि ? ॥ १ ॥" इति।

परगुणान् दृष्ट्वाऽतिहर्पितश्च स्यात्, यदभाणि-

"मनसि वचसि काये पुण्यपीयूपपूर्णा-स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः।
परगुणपरमाणून् पर्वतीकृत्य नित्यं, निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ १ ॥" इति।

तृतीयादत्तादानाश्रवनिवृत्तौ-

"अदत्तं नादत्ते कृतसुकृतकामः किमपि यः, शुभश्रेणिस्तस्मिन् वसति कलहंसीव कमले।
विपत् तस्माद् दूरं व्रजति रजनीवाम्बरमणे-र्विनीतं विद्येव त्रिदिवशिवलक्ष्मीर्भजति तम् ॥ १ ॥"

इत्यार्पवचनं मनसि धारयन् नैव परधनं लेष्टुवद् गृह्णीयात्, धनस्य बाह्यप्राणरूपत्वेन तदपहारे तदाधारान्तःप्राणस्यापि विनाशप्रसङ्गादिति।

तृतीयाश्रवनिवृत्तौ नैवादत्तं गृह्णीयादित्याद्युपदेशः।

चतुर्थमैथुनाश्रवनिवृत्तौ–

"[1]सुविसुद्धसीलजुत्तो, पावइ कित्तिं जसं च इह लोए। सव्वजणवल्लहच्चिय, सुहगइभागी य परलोए ॥ १ ॥
[2]देवदाणवगंधव्वा, जक्खरक्खसकिन्नरा। बंभयारिं नमंसंति, दुक्करं जे करंति ते (तं) ॥ २ ॥"

इत्यादिमहर्षिवचनामृतसिक्तः स्त्रीसङ्गपरित्यागी सर्वथैव स्यात्, तथाऽशक्तावपि द्वितीयादिपट्पर्व-चातुर्मासिकादिपर्वस्विव महामङ्गलकारिपर्युषणापर्वणि त्ववश्यमेव ब्रह्मचर्यव्रतं गृह्णीयात्। ब्रह्मव्रतदार्ढ्यार्थं कथानकमुच्यते–वसन्तपुरे शिवङ्करश्रेष्ठी परमार्हतो निवसति स्म। तत्र श्रीधर्मदाससूरिस्समवासरत्। स तं वन्दित्वा हर्षेणैकदा विज्ञपयति–हे भगवन्! पुण्योदयान्मम लक्षसाधर्मिकान् विविधभोजनैर्भक्त्या भोजयामीत्येवं मनोरथस्सञ्जातः, परं किं करोमि तथाविधं धनं नास्ति, हतभाग्यो निर्भाग्यशेखरोऽहं, भगवन्! रङ्कस्य मे मनोरथस्सफलो भविष्यति न वेति कृपां विधाय ब्रूहि। जगद्वत्सल–गुरुभिरभाणि–भविष्यति, खेदं मा कुरु। हर्षगद्गदगिरा भगवन्! कथमिति पृष्टे तैरुक्तं–याहि भृगुकच्छं श्रीमुनिसुव्रतस्वामिवन्दनार्थं, तत्र जिनदासाभिधश्राद्धस्सुहागदेवीभार्यायुतो वस्त्रभोजनादिभिस्सत्कारयितव्यः, तद्वात्सल्येन लक्षसाधर्मिकभोजनपुण्यं भविष्यति, गुरुवचश्श्रुत्वाऽत्यानन्दितस्स तत्र गत्वा भोजनवस्त्रादिना भक्त्या तं जिनदासं सभार्यं सत्कारयति

१ सुविशुद्धशीलयुक्तः प्राप्नोति कीर्तिं यशश्चेह लोके। सर्वजनवल्लभ एव शुभगतिभागी च परलोके ॥ १ ॥
२ देवदानवगन्धर्वा यक्षराक्षसकिन्नराः। ब्रह्मचारिणं नमस्यन्ति दुष्करं ये कुर्वन्ति तान् ॥ २ ॥

सा, तदनु पृष्टं चतुष्पथे भो लोका! जिनदासोऽयं किं सत्यो वा दाम्भिको वा!, लोकाः कथयन्ति-शृणु श्रेष्ठिन्! स सप्तवार्षिकः पाठशालायां पठनार्थं पित्रा मुक्तः, एकदा तेन तत्त्वामृतवर्षिगुरुमुखात् शीलोपदेशमालाव्याख्यानं श्रुत्वैकान्तरितब्रह्मव्रतं प्रतिपन्नं, एवं सुहागदेव्यापि सुशीलसाध्वीपार्श्वे एकान्तरितशीलव्रतं प्रतिपन्नं, तयोर्भवितव्यतावशात् पाणिग्रहणं जातं, ततो यस्मिन् दिने जिनदासस्य न नियमस्तस्मिन् दिने सुहागदेव्या नियमः, यस्मिन् दिने तस्या न प्रतिज्ञा तस्मिन् तस्याभिग्रहः। रजन्यां मिथस्संलापेन ज्ञातव्यतिकरया सुहागदेव्या प्रमोदभरमेदुरयाऽभाणि-स्वामिन्! पुनरपरस्त्रिया सह पाणिग्रहणं कुरु, अहं दीक्षां ग्रहीष्यामि, स्वामिना प्रोक्तं-हे भद्रे! हंसीव त्वं ब्रह्ममुक्तां भुक्त्वा स्वजन्म सफलं चेत्करिष्यसि तर्हि ब्रह्ममाहात्म्यं ज्ञात्वाऽपि किमहं शूकर इव विषयविष्ठां भुक्त्वा स्वजन्मनैष्फल्यं करिष्यामि! नैवं भावि, किन्त्वहमपि हंस इव ब्रह्ममुक्तां चरित्वा स्वजन्मसाफल्यं करिष्यामि, उप्तो हि पूर्वभवे धर्मवृक्ष एतज्जन्मनि फलीभूतस्सुधीः को न तत्फलं भुङ्क्ते! इत्युक्त्वा श्रीगुरुभगवत्समीपं गत्वा ब्रह्मव्रतं यावज्जीवं सभार्येण तेन गृहीतं, तदानीमेव तस्य धन्यस्त्वमिति ब्रुवता सकलश्रीसङ्घेन परिधापनिका कृता, अतः कारणात् हे शिवङ्कर! जिनदाससमो यावज्जीवमापालब्रह्मचारी नान्यश्श्रावकश्श्रूयते, लोकैरित्युक्ते तत्पादपर्युपासनया स्वमनोरथं पूर्णीकृत्य स्वपुरेऽगाच्छिवङ्कर इति। यदुक्तमपि-

शिवङ्कराख्यो जिनभक्त आसीत्, श्रेष्ठी वसन्ताख्यपुरे समृद्धे।
तत्रातिभाग्योदयतस्समागात्, श्रीधर्मदासाभिधसूरिवर्यः ॥ १ ॥

चतुर्थव्रतमाहात्म्यवर्णने सुहागदेवीयुतजिनदासचरित्रोपवर्णनम्।

विज्ञप्तिमानम्य चकार तं सः, हे नाथ पुण्योदयतः प्रजातः ।
मे लक्षसाधर्मिकभुक्तिभावः, परं धनं नेति करोम्यहं किम् ॥ २ ॥
मनोरथस्सेत्स्यति किं न वेति, प्रत्युत्तरं देहि कृपां विधाय ।
लाभान्तरायान्न भविष्यति त्वा-ऽऽसिरित्यतस्सेत्स्यति ते न सम्यक् ॥ ३ ॥
सूर्युक्तिमाकर्ण्य स खिन्न आह, किं मन्दभाग्योहमनाथनाथ ! ।
श्रेष्ठिन् न खेदं कुरु तेऽभिलाषो, भिन्नप्रकारेण स सेत्स्यतीति ॥ ४ ॥
वचोऽमृतं सोऽथ निशम्य सूरेः, प्रहृष्ट आहेश स कः प्रकारः ।
तमाह सूरिर्मुनिसुव्रतेशं, त्वं याहि नन्तुं भृगुकच्छमच्छम् ॥ ५ ॥
तत्रार्हताग्र्यो जिनदासनामा, सुहागदेवीसहितोऽन्नवस्त्रैः ।
त्वया स सत्कारयितव्य इत्ये, वं भावि लक्षार्हतभुक्तिपुण्यम् ॥ ६ ॥
कर्णप्रियां सूरिगिरं निशम्य, तुष्टस्स गत्वान्नविभूषणाद्यैः ।
भक्त्या सभार्यं जिनदासमर्हद्-भक्तं हि सत्कारयतिस्म मानात् ॥ ७ ॥
ततोऽनु पृष्टं च चतुष्पथे भो-लोकाः ! स सत्यो जिनदास इभ्यः ।
किं वा प्रपञ्चीति, वदन्ति लोकाः, श्रेष्ठिन् ! शृणु त्वं वरतच्चरित्रम् ॥ ८ ॥

पञ्चमपरिग्रहाश्रवनिवृत्तौ धन्यास्ते ये सन्तोषभूषणभूषिताः, अधन्योऽहं यदद्यावधि सन्तोषभूषणेन न भूषितः, तथाप्यस्यां पर्युषणायामष्टदिनावधि सन्तोषभूषणं मया धर्तव्यमेव, यतो लोभार्त्तो ह्यात्मा नैव केनापि प्रपूरितः, यतो यथा यथा प्रपूर्यते तथा तथा लोभगर्त्तो हि महत्तरो भवति। उक्तं च–

"कसिणं पि जो इमं लोयं, पडिपुन्नं दलेज्ज एगस्स। तेणावि से न संतुस्से, इइ दुप्पूरए इमे आया" ॥१॥ इति॥[1]

एवं मत्वाऽष्टदिनावधि सन्तोषवृत्तिं कुर्यादिति। पुनः किंविशिष्टैःश्रावकैः पर्युषणपर्व आराधनीयमित्यत आह–प्रशमरुद्धकषायवर्गैरिति, अस्मिन् पर्वणि प्रशान्तवृत्तिसूच्या क्रोधादिकण्टकचतुष्टयं निष्काशयेत् स्वहृदयात्। यतः–"कषाया देहकारायां, चत्वारो यामिका इव। यावज्जाग्रति पार्श्वस्था–स्तावन्मोक्षः कुतो नृणाम् ॥ १ ॥

[2]"जं अज्जियं चरित्तं, देसूणाए वि पुव्वकोडीए। तं कसाइअमेत्तो, हारेइ नरो मुहुत्तेणं ॥ २ ॥" इति॥

तथा च कषायाणामात्मसन्तापकारिणामुदयस्यैव निरोधोऽत्र कर्त्तव्यः, कदाचिदुदये सति प्रशस्तयोगोदीरणेन तद्विफलीकरणं कर्त्तव्यमिति। पुनः किंविशिष्टैःश्रावकैः पर्युषणाऽऽराधना कर्त्तव्येत्यत आह–श्रीकल्पसूत्रसविधिश्रवणैकतानैरिति, संवेगनिर्वेदादिलोकोत्तरगुणोत्पत्तिद्वाराऽऽत्मोन्नतिकारकस्याष्टाह्निकाव्याख्यानस्यानल्पतत्त्वभृत्कल्पसूत्रस्य च प्रतिदिनं सविधिश्रवणैकचित्तैराराधना कार्या।

१ कृत्स्नमपि य इमं लोकं प्रतिपूर्णं दद्यादेकस्मै। तेनाऽपि स न सन्तुष्येदिति दुष्पूरकोऽयमात्मा ॥ १ ॥
२ यदर्जितं चरित्रं देशोनयाऽपि पूर्वकोट्या। तत्कषायितमात्रो हारयति नरो मुहूर्त्तेन ॥ २ ॥

पञ्चमाश्रवत्यागोपदेशः प्रशमभावेन कषायनिरोधोऽत्र कर्त्तव्य इत्युपदेशश्च।

ननु कल्पसूत्रश्रवणे को लाभ इति चेत्, श्रूयतां तावत् सावधानीभूय–

"तवेण बंभचेरेण य, कणयदाणेण भावओ। कम्मं खवेइ जं तित्थे, तं कप्पस्सवणेण य ॥ १ ॥"

कल्पोऽकल्पसुभावकृत् कलिमलप्रध्वंसयद्वादरः, कल्पस्सर्वसमीहितोदयविधौ कल्पद्रुकल्पः कलौ। ये कल्पं परिवाचयन्ति भविका श्शृण्वन्ति ये चादरात्, ते कल्पेषु विहृत्य मुक्तिवनितोत्सङ्गे सदा शेरते॥२॥ इति

ननु कलिकालेऽपि कल्पद्रुमोपमे श्रीपर्युषणपर्वणि किमन्यत्कर्त्तव्यमित्याशङ्कायामाह–

सार्धं कृपालुगुरुणा भवतारकेण, कार्यं प्रतिक्रमणमात्मविशुद्धिकारि।

कालद्वयं जिनवरोक्तशुभाशयेन, नित्यं प्रमादपरिहारत आर्हतेन ॥ २ ॥

"गुरुसक्खिओ हु धम्मो" इत्युक्तेर्गुरुसमक्षप्रतिक्रमणकरणे स्मारणा–प्रमादपरिहारणादिद्वारा क्रियाविशुद्धेर्विशिष्टभावविशुद्ध्या घनतमबहुकर्मक्षपणेन महाफलावाप्तिं ज्ञात्वा तातपादश्रीगुरुणैव सह प्रतिक्रमणं कर्त्तव्यम्, कारणे गुरुविरहे चैकेनापि तत् कर्त्तव्यम्, उक्तं च–

"पञ्चविहायारविसु-द्धिहेउमिह साहु सावगो वा वि। पडिक्कमणं सह गुरुणा, गुरुविरहे कुणइ इक्कोऽवि ॥१॥"

१ तपसा ब्रह्मचर्येण च, कनकदानेन भावतः। कर्म क्षपयति यत् तीर्थे, तत् कल्पश्रवणेन च ॥ १ ॥
२ पञ्चविधाचारविशुद्धिहेतोरिह साधुश्श्रावको वाऽपि। प्रतिक्रमणं सह गुरुणा गुरुविरहे करोत्येकोऽपि ॥ २ ॥

श्रीकल्पसूत्रश्रवणश्रावणफलोपवर्णनम्।

प्रतिक्रमणं गुरुणा सह विशिष्टफलं ज्ञात्वा कर्त्तव्यं तत्र सिद्धान्तपाठप्रदर्शनं च।

प्रतिक्रमणं भावावश्यकरूपं तच्च षोढेति निरूप्य तत्तदावश्यकफलवर्णनम्।

प्रतिक्रमणं नाम श्रमणेन श्रमण्या श्रावकेण श्राविकया वा विशुद्धचित्तवृत्त्या नित्यमुभयकालं क्रियमाणं ज्ञानक्रियारूपोभयपरिणामात्मकत्वेन लोकोत्तरं नोआगमतो भावावश्यकरूपम्, तच्च सामायिकादिभेदेन षोढा, तत्र 'सामायिकावश्यकेन श्रावकश्श्राविका च सावद्ययोगविरतिं साधुश्च साध्वी च सर्वसावद्ययोगविरतिं करोति,' 'चतुर्विंशतिस्तवावश्यकेन सम्यग्दर्शनविशुद्धिं करोति,' 'वन्दनकावश्यकेन नीचैर्गोत्रकर्म क्षपयति, उच्चगोत्रं च बध्नाति, सौभाग्यमप्रतिहतं निर्वर्त्तयति, लोकस्यानुकूलभावश्च जनयति,' 'प्रतिक्रमणावश्यकेन व्रतातिचारान् स्थगयति, पिहितव्रतातिचारश्च निरुद्धाश्रवोऽष्टप्रवचनमातृषूपयुक्तश्च भवति,' 'कायोत्सर्गावश्यकेनातीतप्रत्युत्पन्नप्रायश्चित्तार्हापराधं विशोधयति, विशोधितापराधश्चापहृतभारो भारवह इव शान्तहृदयः प्रशस्तध्यानोपगतस्सुखी भवति,' 'प्रत्याख्यानावश्यकेनाश्रवद्वाराणि निरुणद्धीति' ॥

"[1]समणेण सावएण य, अवस्स कायव्वयं हवइ जम्हा। अन्तो अहोनिसिस्स य, तम्हा आवस्सयं नाम" ॥१॥

इत्युक्तेश्श्रावकेणापि प्रतिदिनं व्याक्षिप्तचित्तेनापि कर्त्तव्यं प्रतिक्रमणं द्विसन्ध्यं, दिवसनिशाकृतपातकविशुद्धिहेतुत्वेन महाफलत्वात्, उक्तं च–

अवनिष्क्रमणं भाव-द्विपदाक्रमणं च सुकृतसङ्क्रमणम्। मुक्तेः क्रमणं कुर्या-द्विः प्रतिदिवसं प्रतिक्रमणम् ॥१॥ इति

१ श्रमणेन श्रावकेण चाऽवश्यं कर्तव्यं भवति यस्मात्। अन्तोऽहर्निशयोश्च (अहोरात्रस्य मध्ये) तस्मादावश्यकं नाम ॥ १ ॥

श्रूयते हि क्षितिपतां श्राद्धः कश्चिद् द्विसन्ध्यप्रतिक्रमणाऽभिग्रही खलवचसा कुपितेन रुष्टेन सुरत्राणेन सर्वाङ्गं निगडितः कारागृहे क्षिप्तः, उपवासे जातेऽपि सायं प्रतिक्रमणार्थं तत्रस्थाऽऽरक्षकेभ्यः स्वर्णटङ्कं दत्त्वा घटीयुगावधि हस्तनिगडकर्षणपूर्वं प्रतिक्रमणं चक्रे, एवं मासयुगेन षष्टिं सौवर्णटङ्कान् प्रतिक्रमणार्थमेव प्रददे। तन्नियमदार्ढ्यस्वरूपं ज्ञात्वा तुष्टेन नृपेण मुक्तः, परिधापितः, प्राग्वद्विशिष्य सन्मानितश्च। एवं प्रतिदिवसं श्रावकेण प्रतिक्रमणविषये यतनीयम्, प्रतिदिनतच्छक्त्यभावेऽप्यत्राष्टदिनावधि नियमेन तत्कर्त्तव्यमेव। ननु यः श्रावकस्साधुर्वा प्रतिक्रमणसूत्रार्थं नैव जानाति स कथं तेन कर्म क्षपयतीति चेत्, मैवम्, यतो मणिमन्त्रौषध्यादीनामचिन्त्यः प्रभाव इति हेतोः प्रतिक्रमणसूत्रमन्त्राक्षरश्रवणेऽपि महान् गुणः सम्पनीपद्यते, यथाहि-स्थविरा पुत्रस्य हंसस्य दुष्टाऽहिदष्टस्य निश्चेष्टस्य मान्त्रिकैस्त्यक्तस्य शोकार्त्तजनन्या मुहुर्मुहुर्हंस हंसेति पुत्रनामग्रहणपूर्वं रात्रौ नानाविलापकरणेन हंसेतिगारुडमन्त्रबीजाक्षरश्रवणादेव सर्वाङ्गविषबीजव्यपगमात् स सज्जीभूय, तथा मतिमान्द्यादिना मन्त्ररूपसूत्राणां सम्यगर्थानवधारणेऽपि प्रतिक्रामकस्य कर्मक्षयस्स्यादेवेति भावः। पुनः श्रीपर्युषणपर्वण्यन्यत् किं कर्त्तव्यमित्याशङ्कायामाह-

"सामायिकं च समभावमरौ च मित्रे, निश्शेषकर्मविषमुक्त्यहिमन्त्रकल्पम्।
सावद्ययोगपरिहारदृढप्रतिज्ञं, कार्यं त्रिधा परशुचन्दनकल्पवृत्त्या ॥ ३ ॥

व्याक्षिप्तचित्तेन श्रवकेणापि प्रतिक्रमणमवश्यं कर्त्तव्यमित्यत्र ढिल्लीस्थश्राद्धदृष्टान्तः।

सामायिके कृते श्रावकस्तत्राशुभयोगरहिततया श्रमण इव बहुतरकर्मनिर्जरको भवतीति हेतोस्सामायिकं बहुशः कुर्यात्, किञ्च जीवः प्रमादबहुलः तद्वाँश्चैकान्तेनाशुभबन्धक एवेति तत्परिजिहीर्षया बहुवारं सामायिकं कुर्यात्। तदुक्तं निर्युक्तिकृता—

"[1]सामाइअम्मि उ कए समणो इव सावओ हवइ जम्हा। एएण कारणेणं, बहुसो सामाइयं कुज्जा ॥ १ ॥
जीवो पमायबहुलो, बहुसोऽवि य बहुविहेसु अत्थेसु। एएण कारणेणं, बहुसो सामाइयं कुज्जा ॥२॥" इति ॥

ननु सामायिके कृते तत्र सुश्राद्धः किं कुर्यात् किञ्च ध्यायेदिति चेत्, उच्यते—

"[2]तम्मि कए वा पढइ, पोत्थयं वा वाएइ धम्मज्झाणं वा झियायइ, जहा एए, साहुगुणा अहं न समत्थो धारेउं ॥३॥"
(तो उम्मुक्कमणिसुवण्णो पढंतो पोत्थगं वा वायंतो। धम्मज्झाणं झियायति, जहा एते साहुगुणा अहं मंदभग्गो असमत्थो त्ति) इत्यार्षवचनात् सामायिके ज्ञानाभ्यासं कुर्यात् धर्मध्यानं वा ध्यायेत्। यद्वा सामायिके—

१ सामायिके तु कृते श्रमण इव श्रावको भवति यस्मात्। एतेन कारणेन बहुशस्सामायिकं कुर्यात् ॥ १ ॥
जीवः प्रमादबहुलो बहुशोऽपि च बहुविधेष्वर्थेषु। एतेन कारणेन बहुशस्सामायिकं कुर्यात् ॥ २ ॥

२ तस्मिन् कृते पठति पुस्तकं वा वाचयति। धर्मध्यानं वा ध्यायति यथैतान् साधुगुणानहं न समर्थो धारयितुम् ॥ ३ ॥
(तत उन्मुक्तमणिसुवर्णः पठन् पुस्तकं वा वाचयन् धर्मध्यानं ध्यायति यथैतेषु साधुगुणेष्वहं मन्दभाग्योऽसमर्थ इति)

"[1]जिणसासणस्स सारो, चउदसपुव्वाण जो समुद्धारो। जस्स मणे नवकारो, संसारो तस्स किं कुणइ ॥ १ ॥" इत्येवं चतुर्दशपूर्वसारभूतं नमस्कारमन्त्रं स्मरेत्। ननु नमस्कारमन्त्रगुणने किं फलमिति चेत्, सिद्धान्त-गाथाभिरुच्यते-

"[2]नवकार इक्क अक्खर, पावं फेडेइ सत्त अयराइं। पन्नासं च पएणं, पञ्च सयाइं समग्गेणं ॥ १ ॥
जो गुणइ लक्खमेगं, पूएइ विहीइ जिणनमुक्कारं। तित्थयरनामगोअं, सो बंधइ नत्थि संदेहो ॥ २ ॥
अट्ठेव य अट्ठसया, अट्ठसहस्सं च अट्ठ कोडीओ। जो गुणइ अट्ठ लक्खे, सो तइअभवे लहइ सिद्धिं॥३॥" इति॥

सामायिके नमस्कारानानुपूर्वीं वा गुणयेत्, तत्फलं चैवमुक्तं-
"[3]जं छम्मासिअवरिसिअ-तवेण तिव्वेण झिज्जए पावं। नमुक्कारअणणुपुव्वी-गुणणेण तयं खणद्धेण॥१॥ इति

तथा दुष्कृतगर्हणं सुकृतानुमोदनञ्चेत्थं कुर्यात् सामायिके-

सामायिके नमस्कार-मन्त्रस्मरणं नमस्कारानानुपूर्वी-गुणनं च कर्तव्य-मित्यस्य तत्फलस्य च निरू-पणम्।

---

१ जिनशासनस्य सारश्चतुर्दशपूर्वाणां यस्समुद्धारः। यस्य मनसि नमस्कारः संसारस्तस्य किं करोति ? ॥ १ ॥
२ नमस्कार एकाक्षरेण पापं स्फेटयति सप्ताऽतराणि। पञ्चाशच्च पदेन पञ्चशतानि समग्रेण ॥ १ ॥
यो गुणयति लक्षमेकं पूजयति विधिना जिननमस्कारम्। तीर्थंकरनामगोत्रं स बध्नाति नाऽस्ति सन्देहः ॥ २ ॥
अष्टैव चाऽष्टशतान्यष्टसहस्रं चाऽष्टकोटीः। यो गुणयत्यष्टलक्षं स तृतीयभवे लभते सिद्धिम् ॥ ३ ॥
३ यत् षाण्मासिकवार्षिकतपसा तीव्रेण क्षीयते पापम्। नमस्कारानानुपूर्वीगुणनेन तत् क्षणार्धेन ॥ १ ॥

"[1]"जं मणवयकाएहिं, कयकारिअअणुमईहि आयरिअं। धम्मविरुद्धमसुद्धं, सव्वं गरिहामि तं पावं ॥ १ ॥
अहवा सव्वं चिअ वी-यरायवयणाणुसारि जं सुकयं। कालत्तए वि तिविहं (विहिअं), अणुमोएमो तयं सव्वं ॥२॥ इति
"[2]अज्ज घरे नत्थि घयं, हिंगु लोणं च इंधणं नत्थि। जाया य अज्ज तरुणी, कल्ले कह होहि य कुडुंबं? ॥ १ ॥"
इत्येवं न तु गृहकार्यं विविधं विचिन्तयेत्, यदुक्तं-
"[3]सामाइयम्मि य कए, गिहकज्जं जो विचिंतए मूढो। अट्टवसट्टोवगओ, निरत्थयं तस्स सामइयं ॥१॥" इति
पुनरत्र कर्त्तव्यान्तरमाह-

सांवत्सराब्दिकप्रतिक्रमणे विधेया, सत्क्षामणाकरणतो मिथ आत्मशुद्धिः।
मिथ्याऽस्तु पूर्वकृतदुष्कृतमत्र सर्वं, द्राग् मे शिवैकमनसेति विभावनीयम् ॥ ४ ॥

"[4]जो उवसमइ तस्स अत्थि आराहणा, जो उ न उवसमइ तस्स नत्थि आराहणा, तम्हा अप्पणा. चेव

---

१ यन्मनोवचःकायैः कृतकारितानुमतिभिराचरितम्। धर्मविरुद्धमशुद्धं सर्वं गर्हामि तत् पापम् ॥ १ ॥
अथवा सर्वमेव वीतरागवचनानुसारि यत् सुकृतम्। कालत्रयेऽपि त्रिविध(विहित)मनुमोदयामस्तत् सर्वम् ॥ २ ॥
२ अद्य गृहे नाऽस्ति घृतं हिङ्गु लवणं चेन्धनं नाऽस्ति। जाया चाऽद्य तरुणी कल्ये कथं भविष्यति च कुटुम्बम् ॥ १ ॥
३ सामायिके च कृते गृहकार्यं यो विचिन्तयति मूढः। आर्त्तवशार्त्तोपगतो निरर्थकं तस्य सामायिकम् ॥ १ ॥
४ य उपशमयति तस्याऽस्त्याराधना, यस्तु नोपशमयति तस्य नाऽस्त्याराधना, तस्मादात्मना चैवोपशमितव्यम् ॥

उवसमियव्वं" इति प्रभुवचनामृताभिषिक्तस्सन् परे क्षमयन्ति वा न वा, तथापि स्वयमाराधकताप्राप्त्यर्थमत्र क्षमयेदेव परान् मायिकानपि। ननु निर्मायया सर्वजीवक्षमणया जीवः किं जनयतीति चेत्, क्षमणया चित्तप्रसादं जनयति, चित्तप्रसादमुपगतो जीवः सर्वप्राणभूतजीवसत्त्वेषु परहितचिन्तात्मकमैत्रीभावमुत्पादयति, तं चोपगतो जीवो रागद्वेषापगमरूपभावविशुद्धिं कृत्वा निर्भयो भवति, अशेषभयहेत्वभावात्, तेन च मुक्तिरिति।

अथ त्रिभुवनगुरोरर्हत्प्रभोस्स्नात्रादिकमपि स्वात्मनिर्मलकरणभावनया श्राद्धेन कर्त्तव्यमत्रेत्याह–

स्नात्रं वरप्रशमकृद् भवभिज्जिनानां, माङ्गल्यकृत् सुरगिरौ सुरवद् विधाय।
अङ्गाग्रभावविभिदा प्रवरा जिनार्चा, स्वर्गापवर्गजननी विधिना विधेया ॥ ५ ॥

चैत्यगृहादौ एकान्तप्रयतः परित्यक्तान्यकर्त्तव्यः प्रवर्द्धमानातितीव्रतरशुभपरिणामो भक्त्यतिशयान्मुदश्रुपरिपूर्णलोचनो रोमाञ्चितवपुरनादौ संसारेऽतिदुर्लभमिदं सकलकल्याणैककारणमधःकृतचिन्तामणिकल्पद्रुमं भगवत्स्नात्रं कथञ्चिदवाप्तं नातः परं कृत्यमस्तीत्यनेनात्मानं कृतार्थमभिमन्यमानो भुवनगुरौ विनिवेशितनयनमानसश्श्राद्धः स्वयमेकाकी परिवारयुतो वा विविधभक्त्या मेरुशृङ्गसुरकृतस्नात्रानुकारि स्नात्रं सर्वौषधिघनसारघुसृणादिमिश्रजलेन कुर्यात्। जलाभिषेककाले च–

"[1]बालत्तणंमि सामिय!, सुमेरुसिहरम्मि कणयकलसेहिं। तियसासुरेहिं ण्हविओ, ते धन्ना जेहिं दिट्ठोऽसि" ॥१॥

जिनस्नात्राऽधिकारः जिनाभिषेकमाहात्म्यं जिनपूजाफलं तत्कर्त्तव्योपदेशश्च।

१ बालत्वे स्वामिन्! सुमेरुशिखरे कनककलशैः। त्रिदशासुरैस्स्नपितस्ते धन्या यैर्दृष्टोऽसि ॥ १ ॥

इति भावनां भावयेत्। स्नात्रपूर्वकं पूजाकरणमिति तदनु अङ्गाग्रभावभेदत्रयवती पूजा इहलोकपरलोक-विशिष्टफलाशंसां विनैव मोक्षफलेच्छया मतिमता कार्या, तथैव महाफलत्वात्, सापि विशिष्टतरसाधनैः कर्त्तव्या, तथैव भावविशुद्धिभावात्। यदुक्तं—

"पवरेहिं साहणेहिं, पायं भावो वि जायए पवरो। न य अन्नो उवओगो, एएसि सयाण लट्ठयरो॥१॥" इति॥

पूजासामग्र्यभावे जिनदर्शनं त्ववश्यमेव कर्त्तव्यं, तस्यापि सम्यग्दर्शनप्राप्तिहेतुत्वात्, आर्द्रकुमारवत्,

तथाहि—देशे समृद्धे मगधे कुटुम्बी, सामायिको बन्धुमतीप्रियायुक्।
श्रुत्वा सुधर्मं गुरुधर्मघोष-सूर्यन्तिके प्रव्रजितो विरक्तः ॥ १ ॥
स्वाचारनिष्ठो विहरत्यपूर्व-प्रेम्णा सुगीतार्थमुनीन्द्रयुक्तः।
सदा सदाचाररता च साऽपि, सुशीलसाध्वीसमुदाययुक्ता ॥ २ ॥
अथैकदा तां श्रमणीं ग्रहीतुं, भिक्षामटन्तीमवलोक्य तस्याम्।
कर्मोदयात्पूर्वरतस्मृतेस्स, व्यामोहितः कर्मगतिर्हि चित्रा ॥ ३ ॥

---

१ प्रवरैस्साधनैः प्रायो भावोऽपि जायते प्रवरः। न चान्य उपयोग एतेषां सतां लष्टतरः ॥ १ ॥
(प्रवरैः साधनैः प्रायो भावोऽपि जायते प्रवरः प्रधानः, न चाऽन्यः जिनपतिपूजातोऽन्यः, उपयोग एतेषां प्रवरसाधनानां, सतां विद्यमानानां, लष्टतरः प्रधानतर इत्यर्थः।)

अङ्गाग्रभावपूजाधिकारः।

जिनदर्शनं सम्यग्दर्शनहेतुरित्यत्रार्द्रकुमार दृष्टान्तः।

फर्णोपकर्णं श्रमणी तदा तां, संश्रुत्य वार्तां व्रतरक्षणोत्का ।
सा चिन्तयामास विदेशगश्री, स्यां चेत्तथाप्यस्य न मोहमुक्तिः ॥ ४ ॥
शीघ्रं विधायाऽनशनं मृतिर्मे-ऽस्तु मा कथञ्चिद् व्रतभङ्गबुद्धिः ।
निश्चित्य चैवं गलपाशिकां सा, कृत्वा मृतोग्रानशना ययौ द्याम् ॥ ५ ॥
श्रुत्वाऽतिसंवेगपरो मृतां तां, महाव्रतोच्छेद इतो न तस्याः ।
प्राप्तः स मे किं मम जीवनेन, धिङ् मां ततश्चाऽनशनं करोमि ॥ ६ ॥
इत्थं विचिन्त्याऽनभिधाय सूरी-न्मायाव्यनालोचितपापकर्मा ।
त्यक्ताखिलाहारविधिस्स्वबुद्ध्या, स्वर्गं गतस्सोऽनशनं विधाय ॥ ७ ॥
च्युत्वा सुरायुः क्षयतस्स्वपूर्व-जन्मात्तचारित्रविराधनातः ।
स आर्द्रदेशार्द्रपुरे ह्यनार्ये, आर्द्राख्यभूपात्मज आर्द्रकोऽभूत् ॥ ८ ॥
स्वर्लोकतो बन्धुमती विपद्य, वसन्तपुर्यां सुकुले विशुद्धे ।
श्रीदेवदत्तस्य धनावतीतः, श्रीश्रीमतीनामसुताऽथ जज्ञे ॥ ९ ॥
श्रीश्रेणिकेशाय तदाऽऽर्द्रभूप, उपायनोपेतमहत्तमं चै ।
द्राक प्रैषयद्राजगृहं सुप्रीत्यै, तं दृष्टवानार्द्रकुमार एवम् ॥ १० ॥

जिनप्रति-
मादर्शनं स-
म्यग्दर्शन-
हेतुरित्यत्र
आर्द्रकुमार-
दृष्टान्तः ।

त्वया समं मज्जनकेन कस्य, राज्ञो महार्हो ह्युपहार एषः।
सुप्रेष्यते त्वज्जनकातिमित्र-श्रीश्रेणिकेशाय स इत्युवाच ॥ ११ ॥
कुमार ऊचे तनयोऽस्ति कोऽपि, किं तस्य! ओं चेत्कथयाऽभिधां त्वम्।
स आह नाम्नास्त्यभयः कुमार-स्तस्मै तु देयं मम प्राभृतं सत् ॥ १२ ॥
स्निह्यत्यपूर्वं त्वयि चाऽऽर्द्र एवं, श्राव्यं वचो मे प्रणयद्रुवीजम्।
दूतो गृहीतोभयप्राभृतस्स, महत्तमो राजगृहं गतो द्राक् ॥ १३ ॥
श्रीश्रेणिकायाऽथ सुप्राभृतं तद्, दत्वा नृपार्द्रोक्तमुवाच प्रेम्णा।
पुत्राऽऽर्द्रकप्राभृतमर्पयित्वा-ऽभयाय सत्प्रीतिवचोऽवदत्सः ॥ १४ ॥
आसन्नसिद्धिर्भविकोऽयमार्द्रो, विचार्य चैवं परिणामबुद्ध्या।
युगादिनाथप्रतिमामिषेण, सम्यक्त्वरत्नं किल प्रापयामि ॥ १५ ॥
विभाव्य चेत्थं प्रथमेशविम्ब-युक्तां सुपेटामभयस्तु प्रैषीत्।
मत्प्रेषितं प्राभृतमार्द्रकेणै-कान्ते विलोक्यं कथनीयमित्थम् ॥ १६ ॥
स्वीकृत्य गत्वाऽऽर्द्रपुरं ददौ स, श्रीश्रेणिकप्राभृतकं तु राज्ञे।
दत्त्वाऽऽर्द्रपुत्राय ततोऽभयेन, दत्तां सुपेटामथ चोक्तमूचे ॥ १७ ॥

जिनप्रति-
मादर्शनं स-
म्यग्दर्शन-
हेतुरित्यत्र-
आर्द्रकुमार-
दृष्टान्तः।-

नाभेयबिम्बं विजने निरूप्या-ऽऽर्द्रपुत्र ऊहाभरमूर्च्छितोऽभूत् ।
जातश्च जातिस्मरणं भवश्च, पूर्वं स वेदैवमचिन्तयच्च ॥ १८ ॥
महोपकारं कृतवान् कुमारो-ऽभयः सुधर्मप्रतिबोधतो मे ।
अद्याऽपि तद्दर्शनमेव नैव, जातं ममाऽभाग्यशिरोमणेर्वै ॥ १९ ॥
दध्यौ स चाऽऽर्द्रस्सुरलोकभोगै-र्नाऽभूत्सुतृप्तिर्मम मानुषैः किम् ।
निस्सारभोगैर्नु भविष्यतीति, मिथ्या मतिर्मे तदलं नृभोगैः ॥ २० ॥
निर्विण्णभोगस्सुभटैश्च पञ्च-शत्या सुरुद्धोऽपि प्रपञ्च्य राज्ञः ।
गत्वाऽऽर्यदेशं विनिवारितोऽपि, देव्याऽग्रहीत् प्रोल्लसितस्स दीक्षाम् ॥ २१ ॥
आत्तव्रतो द्वादशवत्सरान्ते, भोगावलीकर्मभरोदयेन ।
स श्रीमतीकन्यकयानुरागाद्, वृतश्च भोगान् विविधानभुङ्क्त ॥ २२ ॥
कर्मोदयाद्धि पतितस्स भोग-भोग्यप्यभोगी हि विरक्तचित्तः ।
पुनर्गृहीत्वा रविसंख्यवर्षा-न्ते संयमं मोक्षमगादकर्मा ॥ २३ ॥
इत्थं मनुष्येन्द्रसुरेन्द्रवन्द्य-जिनेन्द्रनाथप्रतिमार्चनाद् वै ।
महोपकारो भविनां तु सिद्धि-प्राप्त्याऽऽर्द्रसूनोरिव चेति सिद्धम् ॥ २४ ॥

जिनप्रतिमादर्शनं सम्यग्दर्शनहेतुरित्यत्र आर्द्रकुमारदृष्टान्तः ।

श्रीपर्युषणपर्वणि घनतरकर्मवनदाहे अग्न्युपमतपोऽपि विशिष्टतरं कर्त्तव्यमित्याशयेनाह-

ज्ञानी सुदृष्टिरपि कोऽपि तपो व्यपोह्य, मोक्षं गतो न च निहन्ति निकाचितं तत् ।
कर्मापि तेन विभुना शिवशर्महेता-वभ्यर्हितं गदितमित्यवगम्य विज्ञैः ॥ ६ ॥
धृत्वाऽत्र धैर्यसुविवेकवरक्षमास्त्रं, जित्वा च मोहनृपमप्यमरोपसर्गे ।
कार्याऽष्टमादिविविधोग्रतपोविलोप-बुद्धिर्न सूर्ययशसेव शिवाभिलाषैः ॥ ७ ॥ युग्मम्

अधिकतरतपःकरणशक्त्यभावेऽपि शल्यत्रयोन्मूलनं जन्मत्रयपावनमष्टमतपोऽवश्यमेव कर्त्तव्यम्, नागकेतुवत्, तस्य महाफलकारित्वात्, उक्तं च-

[1]"जं छम्मासियवरिसिअ-तवेण तिव्वेण कोडिवरिसेण। पावं झिज्जइ मुणिणो, अट्ठमेणं तह पज्जुसणे ॥१॥ इति।

तदपि धीरताक्षमाज्ञानाभ्यासपूर्वकं लोभारम्भविनिर्मुक्तमनिदानञ्च कर्त्तव्यम्, तथैव क्रियमाणस्याऽल्पतपसोऽपि महाफलकारकत्वात्। उक्तं च-

[2]"जस्स धिई तस्स तवो, जस्स तवो तस्स सोग्गई सुलहा। जे अधितिमंतपुरिसा, तवोऽवि खलु दुल्लहो तेसिं ॥१॥



---

१ यत् षाण्मासिकवार्षिकतपसा तीव्रेण कोटिवर्षेण। पापं क्षीयते मुनेरष्टमेन तथा पर्युषणे ॥ १ ॥
२ यस्य धृतिस्तस्य तपः यस्य तपस्तस्य सद्गतिस्सुलभा। येऽधृतिमन्तः पुरुषास्तपोऽपि खलु दुर्लभं तेषाम् ॥ १ ॥

[1]'लोभारम्भविमुत्तं, खंतिपहाणं सनाणमनियाणं। अप्पंपि तवं निहणइ, कम्माइं निकाइयाइंपि ॥२॥" इति ॥
ऐहिककार्यसिद्धिरपि तपसा भवति। उक्तञ्च–
"[2]अथिरंपि थिरं वंकं–पि उज्जुअं दुल्लहंपि तह सुलहं। दुस्सज्झंपि सुसज्झं, तवेण संपज्जए कज्जं ॥ ३॥" इति ॥
तत्र स्वकुटुम्बादिनिवारणेऽपि देवाद्युपसर्गेऽपि च नैव तपो मोक्तव्यम्, श्रीसूर्ययशोवत्।

तथाहि–"[3]जइ सव्वेसु दिणेसु, पालह किरिअं तओ हवइ लट्ठं।
जं पुण तहा न सक्कह, तहवि हु पालिज्ज पव्वदिणं ॥ १ ॥"
श्रुत्वेति धर्मं वनपक्षिणोऽपि, भक्ष्यं न गृह्णन्ति सुपर्वतिथ्याम्।
कथं मनुष्यो जिनधर्मवेत्ता–ऽऽहारं प्रकुर्याद्वरपर्वतिथ्याम् ॥ १ ॥
"[4]सव्वेसु कालपव्वे–सु पसत्थो जिणमए हवइ जोगो।
अट्ठमिचउद्दसीसु अ, नियमेण हविज्ज पोसहिओ ॥ १ ॥"

तपस ऐहिकफलसिद्धिरपीतिवर्णनम्

उपसर्गकालेऽपि नैव तपस्त्यागधीः कार्येत्यत्र सूर्ययशोदृष्टान्तः।

---

१ लोभारम्भविमुक्तं क्षान्तिप्रधानं सज्ञानमनिदानम्। अल्पमपि तपो निहन्ति कर्माणि निकाचितान्यपि ॥ १ ॥
२ अस्थिरमपि स्थिरं वक्रमपि ऋजुकं दुर्लभमपि तथा सुलभम्। दुस्साध्यमपि सुसाध्यं तपसा सम्पद्यते कार्यम् ॥ २ ॥
३ यदि सर्वेषु दिनेषु पालयथ क्रियां ततो भवति लष्टम्। यत्पुनस्तथा न शक्नुथ तथापि पालयथ पर्वदिनम् ॥ ३ ॥
४ सर्वेषु कालपर्वसु प्रशस्तो जिनमते भवति योगः। अष्टमीचतुर्दशीषु च नियमेन भवेत् पौषधिकः ॥ ४ ॥

एवं युगादीशगिरं निशम्य, तपो विना न स्वजनुः प्रकुर्वे ।
व्यर्थं प्रमादादिति कार्यमेव, सुरोपसर्गेऽपि तपो मया वै ॥ २ ॥
निश्चित्य चैवं सुदृढप्रतिज्ञो-ऽष्टमीं तिथिं सूर्ययशा नृपोऽयम् ।
चतुर्दशीं पौषधसुव्रतेन, चाऽऽराधयाश्चक्र उदग्रभावात् ॥ ३ ॥
अर्हत्प्रभूक्तौ दृढभक्तियोग-माराधनां पर्वतिथेश्च दृष्ट्वा ।
अतिप्रसन्नो मघवा दिवौक-स्सभास्थितस्तं प्रशशंस बाढम् ॥ ४ ॥
श्रुत्वोर्वशी विस्मयमादधाना, न श्रद्दधे तद्वचनं कथञ्चित् ।
व्रतादवश्यं प्रतिपातयिष्ये, तं मेरुशृङ्गादिव गण्डशैलम् ॥ ५ ॥
इति प्रतिज्ञां हृदये निधाय, कराम्बुजे सम्परिगृह्य वीणाम् ।
रम्भायुता भूपपरीक्षणार्थं, स्वर्गात्क्षितौ साऽवततार सद्यः ॥ ६ ॥
नाभेयनाथस्य विशालचैत्ये-ऽयोध्यापुरीसन्निहिते तदैव ।
विमोहकृद्रूपमहो ! विधाय, गातुं प्रवृत्ता स्वरमूर्छनाभिः ॥ ७ ॥
आगत्य चैत्यं नृपतिस्ससैन्यो, नत्वा जिनेन्द्रं स ततो निवृत्तः ।
मन्त्रिन्निमे के कुत आगते स्तः ?, प्रधानमित्थं लघु पृच्छति स्म ॥ ८ ॥

आपद्यपि
तपोदार्ढ्यं
विधेय-
मित्यत्र
श्रीसूर्य-
यशोनृप-
दृष्टान्तः ।
॥ १७ ॥

नृपोक्तिमाकर्ण्य स तत्र गत्वा, के स्थो युवां चाथ विवाहिते किम्? ।
अत्राऽऽगते चाऽऽशु किमर्थमित्थं, मन्त्रीश्वरस्ते लघु पृच्छति स्म ॥ ९ ॥
मन्त्र्युक्तिमाकर्ण्य बभाष एका, मन्त्रीश्वराऽऽवां मणिचूडनाम्नः ।
स्वः खेचरेन्द्रस्य सुते कुमार्यौ, वीणासु लीने च सदेत्यऽवेहि ॥ १० ॥
पिताऽतिखिन्नोऽतिसुयोग्यभर्त्र-प्राप्त्या तदोर्वीतलपर्यटन्त्यौ ।
आज्ञात्यधीनं पतिमीक्षितुं स्वो, द्रागागते दर्शनछद्मनाऽत्र ॥ ११ ॥
वाचं तु तस्याः सचिवो निशम्या-वग् वां समं सूर्ययशोनृपेण ।
सरेण रत्या इव सङ्गमोऽर्हों, युष्मत्सुप्रीत्युत्तमपात्रमेषः ॥ १२ ॥
जिनर्षभेशो युवयोः प्रसन्नो, भाग्योदयादेव वरस्स प्राप्तः ।
करिष्यति त्वद्विपरीततां ना-ऽहमत्र साक्षीति न काऽपि चिन्ता ॥ १३ ॥
स्वीकृत्य चेत्थं सचिवाग्रहात्ते, तदैव चैत्याद्बहिरागते द्राक् ।
ताभ्यां नृपः प्रेमरसैकमग्नो-ऽकरोच्च गान्धर्वविवाहमत्र ॥ १४ ॥
ताभ्यां समं भूपतिरेकदाऽथ, ययौ गवाक्षं भविताऽष्टमी श्वः ।
भोः 1 पौषधादावतिसावधाना, भवन्तु जाता शुभघोषणैवम् ॥ १५ ॥

आपद्यपि तपोदार्ढ्यं विधेय-मित्यत्र श्रीसूर्य-यशोनृप-दृष्टान्तः

श्रुत्वा तदा तां किमजानतीव, भ्रान्तोर्वशी सा समयं विदित्वा ।
सम्पृच्छति सेशमहो ! किमेतत्, संश्रूयते ! भूपतिराह तां द्राक् ॥ १६ ॥
विशेषतोऽर्हत्प्रभुणाऽष्टमीयं, चतुर्दशी च व्रतपौषधादौ ।
प्रोक्ते सुधर्मेऽर्हदुपासकानां, प्रोद्बोधनार्थं पुरि मन्नियोगात् ॥ १७ ॥
उद्घोष्यते पूर्वदिने सदाऽद्य, चतुर्दशी श्वो भवितेति घुष्टम् ।
श्रुत्वा नृपोक्तिं चतुरा प्रपञ्च, उर्वश्युवाचाऽऽशु सहासमित्थम् ॥ १८ ॥ युग्मम् ॥
मनुष्यजन्मोच्चतरञ्च राज्यं, नूत्नं वयः कान्तमिदं वपुश्च ।
त्वया तपोभिः कथमेव कष्टै-र्विडम्ब्यते मुग्धतयेह राजन् ! ॥ १९ ॥
श्रुत्वा तदुक्तिं नृप इत्थमूचे, युवां कुलीने चतुरे सुते च ।
विद्याधरस्येति ममाऽद्य नष्टो, भ्रमो नु चण्डालसुताऽधमे स्थः ॥ २० ॥
भवाब्धिनौश्रीजिनधर्मनिन्दा-कृज्जन्म धिग् वै युवयोः कुबुद्ध्योः ।
निस्सारभोगाय युवामिवाऽज्ञो, भूत्वाऽऽतनुं नैव तपस्त्यजामि ॥ २१ ॥
प्राहोर्वशी कोऽपि न तेऽत्र दोषो, भाग्यस्य मे यत् स्ववशं तदेशम् ।
मुक्त्वा स्वतन्त्रः कुपतिर्धृतो हि, भ्रष्टा च शीलात्स्मरसौख्यतश्च ॥ २२ ॥

आपद्यपि
तपोदार्ढ्ये
विधेय-
मित्यत्र
श्रीसूर्य-
यशोनृप-
दृष्टान्तः।

चितामृतिर्मेऽस्त्विति तत्प्रलापं, श्रुत्वाऽऽह भूपो भज मा च दैन्यम् ।
राज्यं च लक्ष्मीमखिलां गृहाण, हठाग्रहं मुञ्च लघु प्रसीद ॥ २३ ॥
चेन्मन्यसे नैवमरं तथापि, पितामहोक्तं सुतपः कृतं यत् ।
पित्रा च मुक्त्वा तदहं सुपर्व, नीचात्मपुंवन्न मुधा नयामि ॥ २४ ॥
छिनत्तु शीर्षं शमनोऽस्तु वन्धो, द्राग् यातु लक्ष्मीः प्रतिपन्नपूर्ता ।
सतां गतिर्या मम साऽस्तु नैतु, तथापि धर्मान्मम धीश्च दूरम् ॥ २५ ॥
श्रुत्वोर्वशी तत्पुनराह भूपं, क्रोधारुणाक्षी वितथं न कुर्वे ।
त्वदुक्तमित्येवमुरीकृतं तत्, त्यजन्न किं लज्जस आसमध्ये ॥ २६ ॥
श्रुत्वा तदुक्तिं निजगाद भूय-श्चिन्तैकमग्नो नृपतिस्तदैवम् ।
अन्यद्यथेष्टं परिमार्गय त्वं, न पर्वभङ्गं मम कारय त्वम् ॥ २७ ॥
श्रुत्वोर्वशी तद्व्रतनिश्चयार्थं, भूयोऽपि राजानमिदं बभाषे ।
न पर्वभङ्गं कुरुषे महीप !, जिनेन्द्रचैत्यं ननु पातय द्राक् ॥ २८ ॥
श्रुत्वेति मूर्च्छामगमन्महीन्द्रो, हाहेति नादः प्रबभूव तत्र ।
नृपोऽतिशीताम्बुनिषेचनेन, मरुयादिना स्वस्थ उवाच चेत्थम् ॥ २९ ॥

आपद्यपि तपोदार्ढ्यं विधेयमित्यत्र श्रीसूर्ययशोनृपदृष्टान्तः

रे रेऽधमे! त्वं वितथं ब्रवीपि, पवित्रवंशे तव नैव जन्म।
चाण्डालजाता कथमन्यथा हि, जिनेन्द्रचैत्योद्दलने नियोगः ॥ ३० ॥
न चैत्यभङ्गं मनसाऽपि कुर्वे, प्रयाचतां यन्मनसेप्सितं ते।
सा प्राह छित्त्वा सुतशीर्षमीश!, त्वं देहि हस्ते स निशम्य चाऽऽह ॥ ३१ ॥
सुतो मदुत्थो हि ततो गृहीत्वा, प्रसीद मे मस्तकमित्थमुक्त्वा।
जग्राह सोऽसिं स्वशिरोऽभिभेत्तुं, तावच्च देवीबलतः स कुण्ठः ॥ ३२ ॥
दृष्ट्वेन्दुमब्धेर्जलवृद्धिवत्स, दृष्ट्वाऽस्य खड्गं परिणामवृद्ध्या।
गृह्णाति यं यं स्वप्रभावतस्तं, तं सा करोति स्म विकुण्ठितं द्राक् ॥ ३३ ॥
कुशाग्रबुद्धिः परमार्थवित् स, तथापि सत्त्वान्न मनाक् चचाल।
तदा स्वरूपं प्रविधाय देव्या–ववोचतां भूप! सदा जयेति ॥ ३४ ॥
युद्धादिवीरास्तु सहस्रशस्त्व–मेवैक ऊर्व्यां जिनधर्मवीरः।
जयाऽऽदिनाथान्वयशीतभानो!, चक्रीशवंशाम्बरतिग्मभानो! ॥ ३५ ॥
यथा न मेरुश्चलति प्रवीर!, तथा न धर्मात्त्वमपीति यावत्।
ते संस्तुतस्तावदुपाजगाम, स्वर्गात्सुरेन्द्रो विकिरन् सुमानि ॥ ३६ ॥

आपद्यपि
तपोदार्ढ्यं
विधेय-
मित्यत्र
श्रीसूर्य-
यशोनृप-
दृष्टान्तः।

अष्टप्रतिज्ञेन्द्रनिरीक्षिता सो-र्वशी सहासं कनके विशुद्धे ।
किं श्यामिका संलगतीति तस्य, गुणान् विशिष्येन्द्रपुरो जगौ द्राक् ॥ ३७ ॥
ययौ स शक्रो मुकुटादि दत्त्वा, सुधीरथो सूर्ययशा नरेन्द्रः ।
सम्बुध्य पश्यन् मणिदर्पणे स्वं, दीक्षां गृहीत्वाऽरमगाच्छिवं सः ॥ ३८ ॥
आश्चर्यकृत्सूर्ययशश्चरित्रं, श्रुत्वा च धृत्वा हृदि सज्जना भोः ! ।
कुशाग्रबुद्ध्या परमार्थतत्त्वं, ज्ञात्वा भवन्तूग्रतपःप्रवीराः ॥ ३९ ॥

अनादिकर्मापहे श्रीपर्युषणपर्वणि न च स्वयं स्वकल्याणार्थं तपःकरणमात्रेण सन्तोष्टव्यं किन्तु–"[1]"जे होंति उत्तमनरा, धम्मं सयमेव ते पवज्जंति । मज्झिमपयई संचो-इया उ न कयाइ वि जहन्ना" ॥१॥ इति महर्षिवचनं हृदयकमले धृत्वा धर्मे मध्यमपुरुषप्रेरणाकरणशीलेन–

[2]'चोएई जो धम्मे, जीवं विविहेण केणइ नएण । संसारचारयगयं, सो नणु कल्लाणमित्तो य ॥ १ ॥

इत्येवंलक्षणकल्याणमित्रीभूयाज्ञजनान् तत्कल्याणार्थं प्रेमोत्पादकसुधामधुरया गिरा प्रोत्साह्य तैरपि तपः कारयितव्यमित्याशयेनाह–

कल्याणमित्रीभूयाऽज्ञान् सुधोक्त्या प्रोत्साह्य तैस्तपः कारयितव्यमित्यधिकारः ।

---

१ ये भवन्त्युत्तमनरा धर्मं स्वयमेव ते प्रपद्यन्ते । मध्यमप्रकृतयः सञ्चोदितास्तु न कदाचिदपि जघन्याः ॥ १ ॥
२ चोदयति यो धर्मे जीवं विविधेन केनचिन्नयेन । संसारचारकगतं स ननु कल्याणमित्रं च ॥ १ ॥

भाग्यात्पर्युषणपर्वणि सज्जना भोः!, सर्वप्रमादमवधूय तपः कुरुध्वम्।
नाहों विलम्ब इति प्रेरणतोऽज्ञपुंसः, प्रोत्साह्य तद्धितगिराऽत्र विधापयेज्ज्ञः ॥ ८ ॥

न च तपःकर्तुः कदाचिद्दैवयोगात्तपःकाल एव मरणे प्रोत्साहयितुः पञ्चेन्द्रियघातकतया विराधकत्वं स्यादिति वाच्यं, घातकपरिणामस्तस्य नेति शुभपरिणामेनाराधकत्वात्, तदेव वृद्धवादेन साध्वीदृष्टान्तेन दशवैकालिकसूत्रटीकायां प्रोक्तं, तथाहि कयाचिदार्ययाऽसहिष्णुः कूरगडुकप्रायःसंयतश्चातुर्मासिकादावुपवासं कारितः, स तदाराधनया मृत एव, ऋषिघातिकाऽहमित्युद्विग्ना सा तीर्थकरं पृच्छामीति गुणावर्जितदेवतया नीता श्रीसीमन्धरस्वामिसमीपं, पृष्टो भगवान् अदुष्टचित्ताऽघातिकेत्यभिहितवानिति।

वेवसायफलं विहवो, विहवस्स फलं सुपत्तविणिओगो। तयभावे ववसाओ-विहवोऽवि अ दुग्गइनिमित्तं ॥१॥

इति महर्षिवचनामृतरसास्वादैकलीनैरुत्तमश्रावकैस्साधर्मिकसङ्घसुपात्रे नियुक्ता निजर्द्धिः पुण्यर्द्धिर्भवतु, मा च भवतु पापकार्ये नियुक्ता पापर्द्धिः, भोगविलासे च नियुक्ता भोगर्द्धिर्दुर्गतिप्रदेति भावनापरैः कल्याणपरम्पराप्राप्त्यर्थं न तु कीर्त्याद्यर्थं स्वद्रव्यैस्साधर्मिकवात्सल्यमपि कर्त्तव्यमेवात्रेत्याशयेनाह—

कार्येष्टभोजनविभिन्नप्रभावनाद्यै-राभ्यादिनन्निखिलसङ्घसप्रेमभक्तिः।
सङ्घो हि तीर्थकरपूजित इत्यतोऽनु, पूज्यस्य तस्य परिधापनिका प्रदेया ॥ ९ ॥

तपःकर्तुस्तत्काल एव मरणे तत्प्रोत्साहयितुस्तद्घातदोष इत्याशङ्कोद्धारः। द्रव्यसाधर्मिकवात्सल्यमप्यत्र कर्त्तव्यमित्युपदेशः। ॥ २० ॥

१ व्यवसायफलं विभवो विभवस्य फलं सुपात्रविनियोगः। तदभावे व्यवसायो विभवोऽपि च दुर्गतिनिमित्तम् ॥ १ ॥

अथ श्रीसङ्घपूजा श्रावकैः कथं कर्त्तव्येति चेत्, उच्यते–

फलताम्बूलवासोभिर्भोजनैश्चन्दनैस्सुमैः । श्रीसङ्घः पूजितो येन, तेन प्राप्तं जनुःफलम् ॥ १ ॥

जिनेन्द्रान्नापरो देवः, सुसाधोर्नापरो गुरुः । न सङ्घादपरं पुण्यं, क्षेत्रमस्ति जगत्त्रये ॥ २ ॥

श्रीसङ्घभक्तिमाहात्म्यं, वक्तुं कैश्चिन्न शक्यते । अर्हत्पदादिपदप्राप्ति-र्यस्या मुख्यफलं स्मृतम् ॥ ३ ॥

इत्याद्युपदेशामृतपानसक्तैः प्रमोदप्रकर्षेण भाग्यवद्भिर्विभवानुसारेण श्रीसङ्घः पूजनीय आभूश्रेष्ठिवत्, तद्वृत्तान्तो मत्कृतश्रीपर्युषणपर्वकल्पप्रभातोऽवसेयः । आदिपदाद्वस्तुपालादिवृत्तान्ता अपि ज्ञेयाः, तत्र वस्तुपालमन्त्रीश्वरवृत्तान्तस्त्वेवम्, नागपुरात् साधुपूनडनिष्काशितश्रीशत्रुञ्जयसङ्घो माण्डलिपुरासन्नं यावदागतस्तावत्सम्मुखमागत्य सादरविज्ञप्तिपुरस्सरं धवलकमानीतः, श्रीवस्तुपालोऽपि सम्मुखमगात्। सङ्घस्य धूली पवनानुकूल्याद् यां यां दिशमनुधावति तत्र तत्र गच्छति मन्त्री । तदा तटस्थैर्भणितं मन्त्रीश ! इतो रजः, इत इतः पादाववधार्यतां, मन्त्रिणोक्तं इदं रजः पुण्यैरेव स्प्रष्टुं लभ्यते, अनेन रजसा स्पृष्टेन पापरजो दूरे नश्यति, यत उक्तम्–

श्रीतीर्थपान्थरजसा विरजीभवन्ति, तीर्थेषु बम्भ्रमणतो न भवे भ्रमन्ति ।

द्रव्यव्ययादिह नराः स्थिरसम्पदः स्युः, पूज्या भवन्ति जगदीशमथार्चयन्तः ॥ १ ॥ इति ।

विविधा श्रीसङ्घभक्तिः कर्त्तव्येत्यस्य तत्फलस्य च निरूपणम् । श्रीसङ्घभक्तौ श्रीवस्तुपालमन्त्रिदृष्टान्तः ।

ततस्सङ्घपतिपूनडमन्त्रिणौ गाढालिङ्गनप्रियालापौ संवृत्तौ, सङ्घश्च सरस्तीरे स्थितः, अथ रात्रौ श्रीवस्तुपालश्चिन्तयति–

"कदा किल भविष्यन्ति, मद्गृहाङ्गणभूमयः। श्रीसङ्घचरणाम्भोज-रजोराजीपवित्रिताः" ॥ १ ॥

इति चिन्तयता मन्त्रिणा प्रभाते जाते स्वयं गत्वा भोक्तुं निमन्त्रिते सङ्घे स्वगृहं समागते श्रीवस्तुपालस्तेषां पादप्रक्षालनं तिलकं च स्वयमेव करोति स्म, एवं जातौ द्वौ प्रहरौ, मन्त्री तु तथैवाऽनिर्विण्णः, तदा तेजःपालेन विज्ञप्तं देव! अथ सङ्घभक्तिमहं करिष्ये, यूयं तु भोजनं कुरुत, अन्यथा तापो भविष्यति, मन्त्रिणोक्तं मैवं वद, पुण्यैरयमवसरो लभ्यते, तदा तं वृत्तान्तं ज्ञात्वा गुरुभिरपि कथितम्–

"यस्मिन् कुले यः पुरुषः प्रधानः, स एव यत्नेन हि रक्षणीयः।
तस्मिन् विनष्टे हि कुलं विनष्टं, न नाभिभङ्गे त्वरका वहन्ति" ॥ १ ॥ इति,

तदनु मन्त्रिणाप्येकं काव्यं लिखित्वा गुरुभ्यः प्रेषितम्–

"अद्य मे फलवती पितुराशा, मातुराशिषि शिखाऽङ्कुरिताऽद्य।
यद् युगादिजिनयात्रिकलोकं, पूजयाम्यहमशेषमखिन्नः" ॥ १ ॥

तदा गुरवोऽपि मौनमाश्रिताः, इत्येवं वस्तुपालवदन्यैरपि श्रीसङ्घभक्तिः कर्त्तव्या, विशेषशक्त्यभावेऽपि यथाशक्ति पूगीफलादिप्रभावनां कृत्वाऽपि सङ्घार्चाकृत्यं भक्त्या सत्यापनीयम्, निस्स्वस्य तावदपि महाफलं, यतः–

"सम्पत्तौ नियमः शक्तौ, सहनं यौवने व्रतं। दारिद्र्ये दानमप्यल्पं, महालाभाय जायते" ॥ १ ॥

अन्यत् किं कर्त्तव्यमित्याशङ्कायामाह–

> अर्हत्क्रियानिरतचित्त उपासकोऽपि, सुसारणादिकरणेन प्रमत्तकेषु।
> साधर्मिकेषु तदपूर्वहिताय भाव–वात्सल्यमर्हदुदितं हृदयेन कुर्यात् ॥ १० ॥

श्रावकेणापि धर्मकार्ये प्रमाद्यतां सारणादिकरणेनाप्रमादभावोत्पादनलक्षणभाववात्सल्यमपि कर्त्तव्यम्। तदुक्तम्–

"[1]सारणा वारणा चेव, चोयणा पडिचोअणा। सावएणावि दायव्वा, सावयस्स हियट्ठया ॥१॥" इति ॥

विस्मृतस्य धर्मकृत्यस्य ज्ञापनं सारणा, तथा कुसंसर्गाद्यकृत्यस्य निषेधनं वारणा, एतयोश्च सततं क्रियमाणयोर्हि कस्यचित्प्रमादबहुलस्य नियमस्खलितादौ युक्तं किं श्राद्धकुलोत्पन्नस्य तवेत्थं प्रवर्तितुमित्यादिवाक्यैः सोपालम्भं प्रेरणं चोदना, तथा तत्रैवासकृत्स्खलितादौ धिक् ते जन्मेत्यादिनिष्ठुरवाक्यैर्गाढतरप्रेरणा प्रतिचोदनेति। सारणादौ कृते कस्यचिदज्ञस्य रोषस्स्यात्, सारणादिकं विषमिवोद्वेगकृच्च स्यात्, नच तथाप्युपेक्षितव्यं, किन्त्वनुग्रहबुद्ध्या हितभाषया प्रेरयितव्यमेव धर्मकर्मण्यहर्निशमिति ॥ १० ॥

भावसाधर्मिकवात्सल्यमप्यत्र कर्त्तव्यमित्यधिकारः। श्रावकेणापि सारणादिकं कर्त्तव्यमित्यधिकारः।

---

[1] सारणा धारणा चेव चोदना प्रतिचोदना। श्रावकेणाऽपि दातव्या श्रावकस्य हितार्थम् (हितेच्छया) ॥ १ ॥

अथ कुलीनानां धर्मे विपीदतां श्रावकाणामुपदेशदानादिप्रकारेण स्थैर्यारोपणं कुर्यात्, आपन्निमग्नानां च स्वधनव्ययेनाभ्युद्धरणमन्तरायदोपाच्च विभवक्षयेऽमृतदृष्ट्या पुनर्ग्रहणाऽनिच्छया स्वधनाऽर्पणेन व्यापारनियोजनेन च पुनः पूर्वभूमिकाप्रापणं कृत्वा धर्मकार्यनियोजनञ्च कुर्यादित्याशयेनाह–

दौस्स्थ्याज्जिनाध्वपततो दृढयेत् कुलीनान्, धर्मे धनार्पणसुधोक्तिसुप्रेरणेन ।
व्यापारयोजनत आत्मसदृङ्महेभ्यान्, कृत्वाऽऽशु धर्मवरकर्मणि योजयेद् वा ॥ ११ ॥

ननु श्रावकाणां तथाविधधर्मदार्ढ्यं केनापि कारितमिति चेत्, कारितमित्युच्यते, यथा सुरगिरौ साधुजगत्सिंहेन थिरापद्रे श्रीश्रीमालाऽऽभूसङ्घपतिना च त्रिशतपष्टिसाधर्मिकाः स्वराशिव्यवसायकारणेनात्मसदृक्षा महेभ्याः कृताः, प्रतिवर्षं प्रतिदिनमेकैकस्मिन् तद्गेहे द्वासप्ततिटङ्कसहस्रव्ययेन साधर्मिकवात्सल्यं च कारितम् ।

अथ शासनोन्नतेस्तीर्थकृत्त्वादिफलजनकत्वात्तामपि कृत्वा सुश्राद्धस्स्वद्रव्यमव्ययं कुर्यादित्याह–

मिथ्यात्विनां शिवपथोन्मुखभावकर्त्रीं, श्रीशासनोन्नतिमपूर्वमहोत्सवाद्यैः ।
कृत्वाऽर्हतो बहुधनैस्स्वधनं शिवार्थी, कुर्यात्समुद्र उदबिन्दुवदव्ययं द्राक् ॥ १२ ॥

केचन भद्रिकजीवा विशिष्टौदार्यशालिभिश्श्रावकैः कृतामनेकविधां शासनोन्नतिं दृष्ट्वाऽयमपि जैनेन्द्रधर्मस्शोभनतर इत्येवं जैनधर्मश्लाघां कुर्वाणा मध्यस्थभावं प्रदर्शयन्तो मार्गानुसारिणो भवन्ति, केचिच्च लघु-

जिनाध्वपततामुपदेशदानस्वधनदानादिना धर्मे स्थैर्यं कर्त्तव्यमित्यधिकारः॥
महोत्सवाद्यैश्शासनोन्नतिविधानेन स्वधनसाफल्याधिकारः ।
॥ २२ ॥

कर्माणस्सम्यग्दर्शनमपि प्राप्नुवन्तीति हेतोस्स्वद्रव्यैस्तां कृत्वाऽत्र स्वपरजन्मसाफल्यं कुर्याद्धनी श्राद्धः । उक्तः श्राष्टके-"तत्तथा शोभनं दृष्ट्वा, साधु शासनमित्यदः । प्रपद्यन्ते तदैवैके, बीजमन्येऽस्य शोभनम् ॥१॥" इति ।

अत्र कल्याणरसैकपिपासूनां श्राद्धानां कर्तव्यान्तरमाह-

चैत्यानुपूर्व्यखिलसाधुनतिस्सदानु-कम्पाख्यदानमतिमानसुपात्रदानम् ।
स्वाध्याय उत्तमतपस्विसुभक्तिभावः, कार्या च धर्मवरजागरिका मुदाऽत्र ॥ १३ ॥

चैत्यपरिपाट्यादिकरणाऽधिकारः

चैत्यानुपूर्वीति, उक्तञ्च-

"चउविहसंघसंजुएहिं-गीयवाइयसुरहिनाएणं । धयधूवमहमहेणं, जिणं वंदेई परिवाडिए ॥ १ ॥" इति ॥

तत्फलं चैवम्-

"पज्जोसणपवे जो-जिणं वंदेई चेइपरिवाडिए । सो लहई सुरलोए-इंदत्तं च तहा मणुअलोए ॥ २ ॥"

समस्तचैत्यसमग्रमुनिवंदनकरणीयत्वस्य तत्फलस्य चाधिकारः ।

अखिलसाधुवन्दनैर्वैयावृत्त्यादिकैश्चात्र शासनशोभा कर्त्तव्या, उक्तं च-

"तह पोसहसालाए-आगच्छेइ मुणिजणं च वंदेई । पभावणसासणसोहा कायघा सम्मदिट्ठीहिं ॥ १ ॥

१ चतुर्विधसङ्घसंयुक्तैर्गीतवादित्रसुरभिनादेन । ध्वजधूपमहमहेन जिनं वन्दते परिपाट्या ॥ १ ॥
२ पर्युषणपर्वणि यो जिनं वन्दते चैत्यपरिपाट्या । स लभते सुरलोके इन्द्रत्वञ्च तथा मनुजलोके ॥ १ ॥
३ तथा पौषधशालायामागच्छति मुनिजनश्च वन्दते । प्रभावना शासनशोभा कर्तव्या सम्यग्दृष्टिभिः ॥ १ ॥

'जो वंदइ भत्तीए, साहूणं पज्जुवासणं च जो कुणइ । पज्जुसणपव्वागए, विमाणियत्तं च सो लहइ ॥२॥" इति ॥

सुपात्रदानवदनुकम्पादानमपि जिनैरनिषिद्धत्वात् शासनप्रभावनाङ्गत्वाच्चात्र कर्त्तव्यम् । उक्तं च–

"²सव्वेहिं जिणेहिं, दुज्जयजियरागदोसमोहेहिं । अणुकंपादाणं पुण, सड्ढाणं न कहिंपि पडिसिद्धं ॥ १ ॥

नेव दारं पिहावेइ भुंजमाणो सुसावओ । अणुकंपा जिणिंदेहिं सड्ढाणं न निवारिआ ॥ २ ॥"

प्रत्युत देशनाद्वारेण राजप्रश्नीयोपाङ्गे श्रीकेशिभगवतोपदिष्टम्, तथाहि–"³मा णं तुमं पएसि? पुव्विं रमणिज्जे भवित्ता पच्छा अरमणिज्जे भविज्जासि" इत्यादि ।

स्वाध्यायेऽपि यत्नः कर्त्तव्योऽत्र, असङ्ख्येयभवीयकर्मक्षयकारणत्वात्, उक्तं च–

"⁴कम्ममसं(खि)खेज्जभवं खवेइ अणुसमयमेव उवउत्तो (आउत्तो)।

अन्नयरम्मि वि जोए सज्झायम्मि उ विसेसेणं ॥ १ ॥

छट्ठट्ठमदसमदुवालसेहिं अबहुस्सुयस्स जा सोही । तत्तो बहुतरिअगुणा हवइ जिमियस्स नाणिस्स ॥२॥" इति ।

१ यो वन्दते भक्त्या साधूनां पर्युपासनं च यः करोति । पर्युषणपर्वण्यागते वैमानिकत्वं च स लभते ॥ २ ॥

२ सर्वैर्जिनैर्जितदुर्जयरागद्वेषमोहैः । अनुकम्पादानं पुनः श्राद्धानां न कस्मिन्नपि (सूत्रे) प्रतिषिद्धम् ॥ १ ॥

नैव द्वारं पिधापयति भुञ्जानः सुश्रावकः । अनुकम्पा जिनेन्द्रैश्श्राद्धानां न निवारिता ॥ २ ॥

३ मा त्वं प्रदेशिन्पूर्वं रमणीयो भूत्वा पश्चादरमणीयो भवेः ॥

४ कर्माऽसंख्येयभवं क्षपयत्यनुसमयमेवोपयुक्तः । अन्यतरस्मिन्नपि योगे स्वाध्याये तु विशेषेण ॥ १ ॥

षष्ठाष्टमदशमद्वादशैरबहुश्रुतस्य या शोधिः । तस्माद् बहुतरगुणा भवति जिमितस्य ज्ञानिनः ॥ २ ॥

अनुकम्पा-सुपात्र-दान-स्वाध्याय-वैयावृत्त्य-धर्मजागरिकाकरणीयत्वाधिकारः।

वैयावृत्त्येऽपि नैव सन्तोषः कर्त्तव्यः, अप्रतिपातिगुणत्वात्, उक्तं च–
"[1]वेयावच्चं निययं, करेह उत्तमगुणे धरंताणं । सव्वं किर पडिवाई, वेयावच्चं अपडिवाई ॥ १ ॥
पडिभग्गस्स मयस्स व, नासइ चरणं सुयं अगुणणाए । न उ वेयावच्चकयं, सुहोदयं नासए कम्मं ॥२॥"

कोऽहं, का मम जातिः को मे देवो गुरुश्च, को मे धर्मः, का चावस्था, के चाभिग्रहा गृहीताः, किं मया सत्कृत्यं कृतं, किञ्च शक्यमवशिष्टं तत्, धर्मे त्वरा गतिरिति शीघ्रं तत्संपूर्णाकर्त्तव्यं प्रमादं परिहृत्य, काऽद्य तिथिः, कोऽद्य कल्याणकदिवसः, अत्र किं मया कर्त्तव्यं तप इत्यादिधर्मजागर्या प्रतिबुद्धेनानन्दकामदेवादिवद्धर्मजागरिका च कर्त्तव्या । ननु भक्तिभरोल्लसितरोमाञ्चेन श्राद्धेनाऽत्र किमन्यत्कर्त्तव्यमिति जिज्ञासायामाह–

देवाधिदेवविभुजीर्णगृहोद्धृतिं यः, कृत्वा सुनव्यमिव तत् स्वधनेन कुर्यात् ।
द्राक् कारयेदमृतवाग्वरनोदनेना–न्यैस्सोऽत्र पर्वणि भवाब्धित उद्धरेत् स्वम् ॥ १४ ॥

उक्तं च–
"[2]जिणभवणाइं जे, उद्धरंति भत्तीइ सडियपडियाइं । ते उद्धरंति अप्पं, भीमाओ भवसमुद्दाओ ॥१॥" इति ।

जीर्णचैत्योद्धारः कर्त्तव्यः कारयितव्यश्च तस्य तत्फलस्य च प्ररूपणम् ।

---

१ वैयावृत्त्यं नियतं कुरुतोत्तमगुणान् धरताम् । सर्वं किल प्रतिपाति वैयावृत्त्यमप्रतिपाति ॥ १ ॥
प्रतिभग्नस्य मृतस्य वा नश्यति चरणं श्रुतमगुणनया । न तु वैयावृत्त्यकृतं शुभोदयं नश्यति कर्म ॥ २ ॥
२ जिनभवनानि य उद्धरन्ति भक्त्या शटितपतितानि । त उद्धरन्त्यात्मानं भीमाद्भवसमुद्रात् ॥ १ ॥

दिव्यौषधं भविनृभावगदप्रणाशे, पुण्यालिपर्युषणपर्वसुधर्मकृत्यम् ।
वाञ्छन्ति ये सुमनसा वचसा स्तुवन्ति, निन्दन्ति न त्रिकरणेन तु तेऽपि धन्याः ॥ १५ ॥
प्रागात्तभूरिसुकृतोत्थसमाधिनैतत्, कुर्वन्ति ये त्रिकरणेन प्रफुल्लचित्ताः ।
शक्त्या जिनोक्तविधिना शिवकाङ्क्षया तै–रेवोर्व्यघैः कलुषिताऽपि कलौ सुपूता ॥ १६ ॥
सज्ज्ञानघोरसुतपोविविधक्रियात्म–नावा ह्यपारभवसिन्धुतितीर्षया ये ।
आराधनामनघपर्युषणेऽत्र वर्यां, कुर्वन्ति यान्ति च कलावपि ते दिवं द्राक् ॥ १७ ॥
स्वर्गेऽपि शाश्वतजिनप्रतिमार्चनोत्काः, प्राप्तेऽथ पर्युषणपर्वणि सोत्सवं ते ।
नन्दीश्वरेऽष्टदिवसावधि तीर्थराज–माराध्य भक्तिभरतस्सुरसद्म यन्ति ॥ १८ ॥
च्युत्वाऽर्हतोच्चकुलजातिभवास्ततस्ते, सज्ज्ञानदर्शनसुसंयममार्गमाप्य ।
आराध्य शुद्धमनसाऽत्र भवे भवाष्ट–मध्येऽथवा शिवशमक्षयमाप्नुवन्ति ॥ १९ ॥

एतत्पर्व-
कृत्याभि-
लाषास्तुल्य-
ऽनिन्दाका-
रिणोऽपि
धन्याः,
कलिकाले-
ऽप्याराधने
स्वर्गः, त-
त्रापि तत-
श्च्युत्वा नृ-
भवेऽपि च
सद्धर्माप्तिः,
अन्ते मो-
क्षश्चेति
निरूपणम् ।

धर्मकृत्य-
प्रवर्त्तमा-
नाभिल-
पत्स्वनिन्द-
कतत्कर्त्रनु-
मोदकानां
फलप्रदर्श-
नम् ।

स्याद्वाददर्शनसमुन्नतिबद्धकक्ष—श्रीनेमिसूरिसुकृपोक्तमिदं सुकृत्यम् ।
आराध्य शुद्धमनसा समहोत्सवं भो, भव्या ! लभध्वमतुलं शिवधामसौख्यम् ॥ २० ॥

श्रीपर्युषणीयसर्वधर्मकृत्येष्वहमहमिकया प्रवृत्तिं तन्वाना एतावतैव कृतकृत्योऽहं नान्यत्साधयितव्यमवशिष्टमित्येवं सन्तोषममन्यमानाश्श्रद्धायोगेन ये ज्ञानचरणेषु वैयावृत्त्यतपआदिषु च यथाशक्तिभावतः प्रवर्त्तन्ते ते, ये चाप्रवर्त्तमाना अपि धर्मानुष्ठानं भावतोऽभिलषन्ति स्वं च निन्दन्ति तत्कर्त्तारमनुमोदयन्ति तेऽपि चेह परत्र च कल्याणपरम्परामवाप्नुवन्ति प्रभुदर्शनवरानुभावादित्यलं पल्लवितेन, विस्तारभीत्या नेह विस्तार्यत इति ।



॥ अथ प्रशस्तिः ॥

संव्याप्तगोर्जगति भव्यकजप्रभूत्यै, श्रीसूर्यमण्डनजिनेश्वरपार्श्वभानोः ।
नित्योदयस्य वरसूर्यपुराधिपस्य, नव्यस्य तापरहिताऽमितगोः प्रभावात् ॥ १ ॥
प्रारब्धसूरिजिनतीर्थसमुन्नतेवैं, व्याप्तत्रिविष्टपप्रभावयशोभरस्य ।
श्रीवीरशासनतपाख्यसुगच्छसम्राट्-श्रीनेमिसूरिसुगुरोरतिप्रौढराज्ये ॥ २ ॥
तत्पट्टभृद्विजयदर्शनसूरिणा तत्-पीयूषवर्षकृपयाऽल्पधिया मयाऽपि ।
श्रीविक्रमाष्टनवनन्दहिमांशुवर्षे, चैत्रीयशुक्लदशमीतिथिशुक्रवारे ॥ ३ ॥
श्रीपर्वपर्युषणकल्पलतेयमर्हद्-धर्मौकसि व्यरचि सूर्यपुरेऽतिभव्ये ।
तत्प्रोक्तमुत्तमजनास्सुधिया विदित्वा, चाराध्य मुक्तिनिलयं द्रुतमाप्नुवन्तु ॥ ४ ॥
चतुर्भिः कलापकम् ॥

यत्किञ्चिदत्र विषये प्रसृतं प्रमादाद्, मद्दिक्षणं तदखिलं कृपया क्षमध्वम् ।
मार्गे पतन्तमसकृत्प्रहसन्त्यविज्ञाः, प्राज्ञास्समादधति तत्र गुणेक्षणा ये ॥ ५ ॥
श्रीसार्वतत्त्वरससङ्गतितस्सुवर्ण-भावं गते स्वगुरुहस्तकजार्पितेऽस्मिन् ।
क्षेत्रे सुबीजमिव यन्गुरोः प्रसादाद्, यत्नोऽत्र मे सफलतां कलयत्वजस्रम् ॥ ६ ॥

॥ इति श्रीपर्युषणपर्वकल्पलताऽ-

परनाम्नी

श्रीपर्युषणपर्वविंशिका ॥

## ॥ श्रीपर्युषणकल्पलतामूलश्लोकाः ॥

आवासराष्टकसुपोषधमग्नचित्तै–स्त्यक्ताश्रवैः प्रशमरुद्धकषायवर्गैः ।
श्रीकल्पसूत्रसविधिश्रवणैकताने–राराधना जिनमतोन्नतिकाऽत्र कार्या ॥ १ ॥
सार्धं कृपालुगुरुणा भवतारकेण, कार्यं प्रतिक्रमणमात्मविशुद्धिकारि ।
कालद्वयं जिनवरोक्तशुभाशयेन, नित्यं प्रमादपरिहारत आर्हतेन ॥ २ ॥
सामायिकं च समभावमरौ च मित्रे, निश्शेषकर्मविषमुक्त्यहिमन्त्रकल्पम् ।
सावद्ययोगपरिहारदृढप्रतिज्ञं, कार्यं त्रिधा परशुचन्दनकल्पवृत्त्या ॥ ३ ॥
सर्वैस्तथाऽऽब्दिकप्रतिक्रमणे विधेया, सत्क्षामणाकरणतो मिथ आत्मशुद्धिः ।
मिथ्याऽस्तु पूर्वकृतदुष्कृतमत्र सर्वं, द्राग् मे शिवैकमनसेति विभावनीयम् ॥ ४ ॥
स्नात्रं वरप्रशमकृद्भवभिज्जिनानां, माङ्गल्यकृत्सुरगिरौ सुरवद् विधाय ।
अष्टप्रभावविभिदा प्रवरा जिनार्चा, स्वर्गापवर्गजननी विधिना विधेया ॥ ५ ॥
ज्ञानी सुदृष्टिरपि कोऽपि तपो व्यपोह्य, मोक्षं गतो न च निहन्ति निकाचितं तत् ।
कर्मापि तेन विभुना शिवसर्वहेता–वभ्यर्हितं गदितमित्यवगम्य विज्ञैः ॥ ६ ॥

धृत्वाऽत्र धैर्यसुविवेकवरक्षमास्त्रं, जित्वा च मोहनृपमप्यमरोपसर्गं ।
कार्योऽष्टमादिविविधोग्रतपोविलोप-बुद्धिर्न सूर्ययशसेव शिवाभिलाषैः ॥ ७ ॥ युग्मम् ॥
भाग्यात्पर्युषणपर्वणि सज्जना भोः !, सर्वप्रमादमवधूय तपः कुरुध्वम् ।
नार्हो विलम्ब इति प्रेरणतोऽज्ञपुंसः, प्रोत्साह्य तद्धितगिराऽत्र विधापयेज्ज्ञः ॥ ८ ॥
कार्याष्टभोजनविभिन्नप्रभावनाद्यै-राभ्यादिवन्निखिलसङ्घसप्रेमभक्तिः ।
सङ्घो हि तीर्थकरपूजित इत्यतोऽनु, पूज्यस्य तस्य परिधापनिका प्रदेया ॥ ९ ॥
अर्हत्क्रियानिरतचित्त उपासकोऽपि, सुस्मारणादिकरणेन प्रमत्तकेषु ।
साधर्मिकेषु तदपूर्वहिताय भाव-वात्सल्यमर्हदुदितं हृदयेन कुर्यात् ॥ १० ॥
दौःस्थ्याज्जिनाध्वपततो द्रढयेत् कुलीनान्, धर्मे धनार्पणसुधोक्तिसुप्रेरणेन ।
व्यापारयोजनत आत्मसदृङ्महेभ्यान्, कृत्वाऽऽशु धर्मवरकर्मणि योजयेद् वा ॥ ११ ॥
मिथ्यात्विनां शिवपथोन्मुखभावकर्त्री, श्रीशासनोन्नतिमपूर्वमहोत्सवाद्यैः ।
कृत्वाऽर्हतो बहुधनैस्स्वघनं शिवार्थी, कुर्यात्समुद्र उदबिन्दुवदव्ययं द्राक् ॥ १२ ॥
चैत्यानुपूर्व्यखिलसाधुनतिस्सदानु-कम्पाख्यदानमतिमानसुपात्रदानम् ।
श्लाघ्याप उत्तमतपस्विसुभक्तिभावः, कार्या च धर्मवरजागरिका मुदाऽत्र ॥ १३ ॥

देवाधिदेवविभुजीर्णगृहोद्धृतिं यः, कृत्वा सुनव्यमिव तत्स्वधनेन कुर्यात् ।
द्राक् कारयेदमृतवाग्वरनोदनेना-ऽन्यैस्सोऽत्र पर्वणि भवाब्धित उद्धरेत्स्वम् ॥ १४ ॥
दिव्यौषधं भविजभावगदप्रणाशे, पुण्यालिपर्युषणपर्वसुधर्मकृत्यम् ।
वाञ्छन्ति ये सुमनसा वचसा स्तुवन्ति, निन्दन्ति न त्रिकरणेन तु तेऽपि धन्याः ॥ १५ ॥
प्रागात्तभूरिसुकृतोत्थसमाधिनैतत्, कुर्वन्ति ये त्रिकरणेन प्रफुल्लचित्ताः ।
शक्त्या जिनोक्तविधिना शिवकाङ्क्षया तै-रेवोर्व्यघैः कलुषिताऽपि कलौ सुपूता ॥ १६ ॥
सज्ज्ञानघोरसुतपोविविधक्रियात्म-नावा ह्यपारभवसिन्धुतितीर्षया ये ।
आराधनामनघपर्युषणेऽत्र वर्या, कुर्वन्ति यान्ति च कलावपि ते दिवं द्राक् ॥ १७ ॥
स्वर्गेऽपि शाश्वतजिनप्रतिमार्चनोत्काः, प्राप्तेऽथ पर्युषणपर्वणि सोत्सवं ते ।
नन्दीश्वरेऽष्टदिवसावधि तीर्थराज-माराध्य भक्तिभरतस्सुरसद्म यन्ति ॥ १८ ॥
च्युत्वाऽर्हतोबकुलजातिभवास्ततस्ते, सज्ज्ञानदर्शनसुसंयममार्गमाप्य ।
आराध्य शुद्धमनसाऽत्र भवे भवाष्ट-मध्येऽथवा शिवशमक्षयमाप्नुवन्ति ॥ १९ ॥
स्याद्वाददर्शनसमुन्नतिबद्धकक्ष-श्रीनेमिसूरिसुकृपोक्तमिदं सुकृत्यम् ।
आराध्य शुद्धमनसा समहोत्सवं भो, भव्या! लभध्वमतुलं शिवधामसौख्यम् ॥ २० ॥

॥ देवेन्द्रनरेन्द्रवृन्दवन्द्ययोगिध्येयानल्पलब्धिनिधानाय श्रीगौतमस्वामिने नमः ॥

प्रौढप्रभाव–तपागच्छसूरिसम्राट्–श्रीविजयनेमिसूरिसद्गुरुभ्यो नमः ॥

## ॥ विस्तरजिज्ञासुजनोपकृतये श्रीमदार्द्रकुमारचरित्रं मुनिजयानन्दविजयकृतम् ॥

श्रीवीरेशं रविमिव गवा विश्वविश्वप्रकाशं, नेमिं सूरिं भविहितकरं सूरिसम्राजमिज्यम् ।
सूरिं न्यायागमकृतिवरं दर्शनाख्यं च नत्वा, वयं वक्ष्ये गुरुसुकृपया चार्द्रसूनोश्चरित्रम् ॥ १ ॥

द्वीपेऽत्र जम्बौ भरते समृद्धे, समुद्रतीरे यवनाख्यदेशः ।
अस्त्यार्द्रकं नाम पुरं समृद्धं, तत्रार्द्रको नाम नृपो बभूव ॥ १ ॥
तस्यार्द्रिका शीलगुणा सुराज्ञी, पुत्रस्तयोरार्द्रकुमारनामा ।
गुणाग्रणीश्चाद्भुतलक्षणाढ्यः, कलाकलापः कलवाक् कलिघ्नः ॥ २ ॥
वत्सो महोक्षत्वमिव द्विपेन्द्र–भावं श्रयन् वा कलभस्तथैव ।
स यौवनं प्राप्य यदृच्छयैव, भोगाननेकान् बुभुजे कुमारः ॥ ३ ॥
श्रीश्रेणिकेनास्य बभूव मैत्री, कुलक्रमात् प्रेमवरा च राज्ञः ।
श्रीश्रेणिकः प्राभृतमेकदाऽऽर्द्र–नृपाय सम्प्रेषयदाशु प्रीत्यै ॥ ४ ॥

मन्त्री तदादाय दिनैः कियद्भि-रगात् स तत्राद्रंकपार्थिवेन ।
सन्मानितो मङ्गलप्रश्नपूर्वं, मुदा तदादाय स तुष्टुवे तम् ॥ ५ ॥
परस्परं मङ्गलवार्त्तया तौ, प्रहृष्टचित्तौ भवतस्स्म बाढम् ।
कश्श्रेणिकोऽसाविति तातपादं, स पृष्टवानाद्रंकुमार एवम् ॥ ६ ॥
राजोक्तवान् श्रेणिकनामधेयः, स मागधानामधिपो विवेकी ।
कुलक्रमात् प्रेमनिबन्धनेयं, प्रीतिः सदा नौ परिवर्त्तते हि ॥ ७ ॥
श्रुत्वा पितुर्वाचमपृच्छदाद्रों, मन्त्रीश्वरं तं वरहार्दभावात् ।
नृपस्य तस्याऽऽत्मभवोऽस्ति कोऽपि !, आँ चेत्तदा ब्रूहि तदीयनाम ॥ ८ ॥
नाम्नाऽस्य पुत्रोऽस्त्यभयः कुमारो, बुद्ध्या गुरुस्सर्वकलानिधानः ।
इति प्रधानस्य वचो निशम्य, तमुक्तवानाद्रंकुमार इत्थम् ॥ ९ ॥
आज्ञां मदीयामनुगम्य मन्त्रिन् !, त्वया प्रयातव्यमितोऽन्यथा नो ।
स्नेहद्रुबीजप्रतिमां मदीयां, निवेदयेर्गामभयाय शीघ्रम् ॥ १० ॥
अथाऽन्यदा प्राभृतमाद्रंभूपो-ऽदात् श्रेणिकायाऽऽर्द्रसुतोऽप्ययच्छत् ।
सम्यक्त्वलाभार्थमिवाऽभयाय, श्रीमन्त्रिहस्तेन सुरत्नजातम् ॥ ११ ॥

जिनप्रतिमादर्शने सम्यग्दर्शनोत्पत्तिरित्येतद्विषये श्रीमदार्द्रकुमारचरित्रम् ।

आर्द्रस्य भूपस्य वराज्ञयाऽऽशु, मन्त्री ययौ श्रेणिकभूपपार्श्वम् ।
श्रीश्रेणिकायाऽभयमन्त्रिणे च, तत्सोऽर्पयामास पृथक् पृथग् द्राक् ॥ १२ ॥
स्निह्यत्यसौ गाढमहो त्वयीशा-ऽभयं तदोवाच सुधागिरा सः ।
श्रुत्वाऽभयो जैनमतातिविज्ञो, विचिन्तयामास हृदा तदेवम् ॥ १३ ॥
श्रामण्यधर्मस्य विराधनातो-ऽनार्येषु जातोऽपि च बोधिबीजम् ।
वप्तुं सुयोग्योऽल्पभवो महात्मा, सौहार्दमिच्छत्यधुना मयाऽऽसौ ॥ १४ ॥
अदृष्टकल्याणसुदूरभव्या-ऽभव्याङ्गिनां मां प्रति मैत्र्यभावः ।
उदेति नो जातु ततोऽहमेनं, प्रवर्त्तये जैनसुधर्ममार्गे ॥ १५ ॥
उपायनव्याजत आदिदेव-मूर्त्तिं सुपेट्यां विधिना निधाय ।
दत्वा च तालं सकमुद्रयाऽसौ, तां मुद्रयामास विधानविज्ञः ॥ १६ ॥
इमां विलोक्यास्य भवेत्कदाचि-ज्जातिस्मृतिस्तद्भवितेष्टसिद्धिः ।
इतीव कालं प्रसमीक्षमाणो-ऽभयस्तदोत्कण्ठित एव चासीत् ॥ १७ ॥
आर्द्रेशदूतं निजमन्त्रिणाऽरं, सहागतं प्राभृतकं प्रभूतम् ।
समर्प्य राजा विससर्ज मित्रा-र्द्रभूपसंदेशवचो गदित्वा ॥ १८ ॥

अथाभयस्तस्य करे निधाय, पेटीं सुसत्कृत्य सुधागिराऽवक् ।
त्वया रहस्येव समर्पणीये-यं पेटिकाऽऽर्द्रेशसुतार्द्रकाय ॥ १९ ॥
वाच्यं त्वया तस्य रहस्त्वयैवो-द्धाट्या तदन्तर्गतवस्तु यत्तत् ।
स्वयं विलोक्यं न परस्य कस्या-ऽपि दर्शनीयं खलु राजपुत्र ! ॥ २० ॥
श्रुत्वाऽभयोक्तं स जनोऽभ्युपेत्या, ऽऽर्द्राख्ये पुरे भूपसभां समेत्य ।
तत्प्राभृतं चाऽऽर्द्रनृपाय दत्त्वा, श्रीश्रेणिकेशोक्तवचस्तमूचे ॥ २१ ॥
रहः कुमाराय ददौ स पेटीं, प्रोचेऽभयोक्तां गिरमिष्टबुद्ध्या ।
अथाऽऽर्द्रकस्तां विजने सुपेटी-मुद्घाटयामास महादरेण ॥ २२ ॥
द्राग् द्वादशेनोज्ज्वलितां मनोज्ञां, तामार्षभीयां प्रतिमां विलोक्य ।
किमस्ति देहाभरणं हि किञ्चि-दत्युत्तमं प्राभृतमागतं मे ॥ २३ ॥
किं मूर्ध्नि धार्यं किमु कण्ठहारः, किं वा हृदीदं परिधेयमस्ति ।
पूर्वं मया दृष्टमिदं क्व चापि, न चाधुना मे स्मृतिमार्गमेति ॥ २४ ॥
इत्थं दृढं भावयतोऽस्य मूर्च्छा, जातिस्मृतेः कारणमभ्यमाप्ता ।
शैत्योपचारागतचेतनोऽसौ, पूर्वं भवं वेद कुमार आर्द्रः ॥ २५ ॥

जिनप्रतिमादर्शने सम्यग्दर्शनोत्पत्तिरित्येतद्विषये श्रीमदार्द्रकुमारचरित्रम् ।

इतोऽथ देशे मगधे तृतीये, भवे वसन्ताख्यपुरे कुटुम्बी ।
जातोऽस्म्यहं सामयिकाभिधानः, पत्नी च मे बन्धुमती बभूव ॥ २६ ॥
श्रीधर्मघोषाख्यकसूरिपार्श्वे, भार्यातया सार्धमपूर्वधर्मम् ।
अश्रौषमस्मिन् क्षण एव बोधि–माप्तो गतश्चोग्रविरक्तभावम् ॥ २७ ॥
तदाऽऽत्तदीक्षस्सुगुरोः प्रियायुक्, तेनैव सार्धं विहरन् क्रमेण ।
अगच्छमेकं नगरं तदाऽऽगात्, सुशीलसाध्व्या सह साऽपि साध्वी ॥ २८ ॥
विलोक्य तां द्राङ् मदनस्मृतेर्मे, मोहो महानाविरभूच्च तस्याम् ।
प्रवर्तिनी तत्परिबुध्य साध्व्यै, श्रीबन्धुमत्यै समुवाच वृत्तम् ॥ २९ ॥
सा चिन्तयामास विदेशगन्त्री, स्यां चेत्तथाप्यस्य न मोहमुक्तिः ।
अतः कृतोग्रानशना म्रियेऽहं, नो येन नौ शीलविखण्डनं स्यात् ॥ ३० ॥
एवं विचार्य व्रतरक्षणोग्र–भावा तदा साऽनशनं विधाय ।
मृताऽमरत्वं लभते स श्रुत्वा, ऽहं तत्तदैवाऽकरवं विचारम् ॥ ३१ ॥
महानुभावा व्रतभङ्गभीत्या, जहावसून् सा नियतं व्रताढ्या ।
अतः कृतं मेऽद्य कुजीवनेने–त्येवं विचिन्त्याऽनशनं त्वकार्षम् ॥ ३२ ॥

विपद्य देवत्वमवाप्य तस्मा-च्च्युतोऽभवं चार्हतधर्महीने ।
अनार्यदेशे प्रतिबोधलाभो, जातस्सुभाग्यादभयप्रसादात् ॥ ३३ ॥
अद्यापि तद्दर्शनमेव नैव, जातं ह्हाऽभाग्यशिरोमणेर्मे ।
अतोऽनुमत्या पितुरप्रमत्तो, द्रुतं गमिष्यामि तमार्यदेशम् ॥ ३४ ॥
आर्द्रस्सदैवं विदधद्विचारं, प्रपूजयन् तां प्रतिमां सुभक्त्या ।
व्यज्ञापयत् स्वं पितरं कदापि, प्रेम्णाथ सन्मित्रविलोकनाशाम् ॥ ३५ ॥
पितर्मदीयं प्रियमित्रमेवा-भयः कुमारो मतिमान् वरीयान् ।
तद्दर्शनेच्छाऽतिगरीयसी मे, तत्रानुमन्ता भव पूज्यपाद ! ॥ ३६ ॥
श्रुत्वा नृपोऽवङ् न हि वत्स ! तत्र, चिन्त्या यियासा भवता कदापि ।
इह स्थितस्यैव ममापि मैत्री, श्रीश्रेणिकेन प्रतिशोभते हि ॥ ३७ ॥
इत्थं स्वपित्रा प्रतिरुद्ध एवा-र्द्रो मित्रसंदर्शनकामुकोऽपि ।
ग्रावावरुद्धा तटिनीव गन्तुं, स्थातुं न चासौ मतिमान् शशाक ॥ ३८ ॥
यानेऽथ पाने शयनेऽशने च, व्यापारजातेऽप्यहरहोऽभयं तम् ।
विचिन्तयन् तां दिशमेव पश्यन्, तदेकदृष्टिस्स बभूव चार्द्रः ॥ ३९ ॥

भवेत्स कीदृग् मगधाख्यदेशः, कीदृग् भवेत् राजगृहं पुरं तत् ।
को मुख्यमार्गोऽस्य कियच्च दूरं, पप्रच्छ पार्श्वस्थजनान् सदैव ॥ ४० ॥
भूपोऽथ दध्याववनिर्वेद्य मह्यं, गच्छेत् कुमारोऽभयपार्श्वमाशु ।
इतीव सामन्तशतानि पञ्चा-दिदेश रक्षाकरणाय तस्य ॥ ४१ ॥
आर्द्रोऽभयप्रेमवशोऽथ गन्तुं, निश्चित्य संवाहयते स्म वाहान् ।
सामन्तकाः पृष्ठत एव वाजि-पृष्ठाऽधिरूढाः परिपालयन्ति ॥ ४२ ॥
स प्रत्यहं कर्म करोति चेत्थं, गत्वा परावृत्त्य समेति नित्यम् ।
विश्वास्य तानार्द्रकुमार आशु, यातोऽब्धितीरेऽश्वत एकदा सः ॥ ४३ ॥
अनेकरत्नप्रभमूर्त्तियुक्तः, पूर्वादिसङ्केतत एव तत्र ।
स्थितां समारुह्य तरिं गतो द्रा-गुत्तीर्य भक्त्याऽभयमाऽऽनतस्सः ॥ ४४ ॥
मूर्त्तिं ददौ तामभयाय सप्त-क्षेत्रेषु चोप्त्वा सकलं धनं तत् ।
गृह्णाति यावन्मुनिवेषमेष, तावज्जगौ शासनदेवता खे ॥ ४५ ॥
यद्यप्यचाल्यं तव सत्त्वमस्ति, तथापि दीक्षाग्रहणं न युक्तम् ।
अद्यापि भोगावलिकर्म तेऽस्ति, तद् भुङ्क्ष्व पश्चाल्लघु दीक्षिपीष्ठाः ॥ ४६ ॥

तीर्थंकराणामपि भोग्यकर्म, भोगं विना नैव लयं प्रयाति।
श्राध्यानु दीक्षा स्वककर्म भुक्त्वा, तदेव भोज्यं ननु जीर्यते यत् ॥ ४७ ॥
निवारितोऽप्यार्द्रकुमार एवं, देवेन सत्त्वाज्जगृहे स दीक्षाम्।
न सत्त्ववन्तस्स्वमनीषिताथात्, पश्चाद्‌वलन्ते विषमेऽपि मार्गे ॥ ४८ ॥
प्रत्येकबुद्धस्स मुनिः सुतीक्ष्णं, व्रतं समाराधयते दृढस्सन्।
अमन्नचन्यामगमद्वसन्त-पुरं च तस्थौ प्रतिमां विधाय ॥ ४९ ॥
श्रीदेवदत्तेभ्यधनावतीस्त्री-पुत्रीतपोपार्जनि बन्धुमत्याः।
च्युत्वाऽऽशु जीवस्त्रिदिवात्स नाम्ना, श्रीश्रीमती तत्र वसन्तपुर्याम् ॥ ५० ॥
क्रीडापरा देवकुलेऽथ पौर-कन्याभिरागात् सुपतिं वरा सा।
स्वस्वेष्टनाथं परिवव्रुरन्याः, साधुर्मयाऽसौ वृत इत्यवक् सा ॥ ५१ ॥
तदा सुरी साध्विति वाचमुक्त्वा, ववर्ष रत्नानि जगर्ज चाशु।
भीता मुनेः पादतले प्रलग्ना, श्रीश्रीमती सोऽथ मुनिः प्रदध्यौ ॥ ५२ ॥
इहोपसर्गो मम चानुकूल, एवेति मत्वा क्वचनाप्यगच्छत्।
अस्वामिकं राजधनं भवेदि-त्यादातुमुर्वीपतिरागतोऽत्र ॥ ५३ ॥

स्वं तत् ग्रहीतुं सुभटा यतन्ते, तत्रैव तावत् ददृशुर्भुजङ्गान् ।
सा देवता तान् प्रजगाद स्वं त-दस्यै कुमार्यै प्रददे मुदैवम् ॥ ५४ ॥
रत्नानि जग्राह पिता वरीतुं, कन्यार्थिनः केऽपि तदाऽऽययुर्द्राक् ।
श्रीश्रीमती साधुमहं वृतास्मि, नाऽन्यं वृणेऽतो वरमित्युवाच ॥ ५५ ॥
प्रगृह्णता तद्धनजातमित्या-नुमानितं किं भवता न तात ! ।
सन्तः प्रजल्पन्ति सकृत् तथैव, कन्या सकृच्चैव तु दीयते वै ॥ ५६ ॥
श्रुत्वा च कन्यावचनं जगाद, पिता न चैकत्र स तिष्ठतीह ।
इतस्ततोऽसौ भ्रमरप्रकल्पो-ऽनुवासरं संपरिबंभ्रमीति ॥ ५७ ॥
ज्ञेयः कथं सोऽथ समागतोऽपि, मुनिर्न चिह्नं ननु विद्यतेऽस्य ।
जानामि चिह्नं भयपादलग्ना, तदीयमित्थं निजगाद बाला ॥ ५८ ॥
आयान्ति वा यान्ति च येऽत्र पुर्यां, सत्साधवस्तेभ्य इमां सुभिक्षाम् ।
ददेऽन्वहं तन्नियतं विधेहि, ज्ञास्यामि तस्मात्तमहं मुनीन्द्रम् ॥ ५९ ॥
अथान्वहं सा च तथा चकार, निरीक्षमाणा मुनिराजमेनम् ।
मुनेः पदाब्जं नमति स्म नित्यं, तदीयचिह्नेक्षणकामुका सा ॥ ६० ॥

दिग्मूढपुंवत् स मुनिः कदाचित्, समागतो द्वादशवत्सरान्ते ।
स लक्षितो लक्षणकेन सम्यक्, सा श्रीमती तं प्रजगाद नम्रा ॥ ६१ ॥
देवालये त्वं च मया धृतोऽसि, वरस्स मे भाग्यवशादुपेतः ।
मुग्धां न मां नाथ! परित्यज त्वं, नो चेत्प्रवेक्ष्ये हुतभुङ्मुखेऽहम् ॥ ६२ ॥
तदीयपित्रादिभिराग्रहेण, सोऽभ्यर्थितस्तद्वचनं च देव्याः ।
ससार तत्कर्मविनाशनाय, तां पर्यणैषीन्महतोत्सवेन ॥ ६३ ॥
स्वैरं तया सार्द्धमपूर्वभोगाद्, जज्ञे सुतो वृद्धिमियाय पत्नीं ।
प्रोचे प्रिये! ते तनयस्सहायो, जातो ग्रहीष्येऽहमतोनु दीक्षाम् ॥ ६४ ॥
मनस्विनी सा स्वसुतस्य चाग्रे, तूलं समादाय च तर्कुमेवम् ।
तत्कर्त्तनं प्रारभतान्यदाऽम्बां, पप्रच्छ पुत्रः किमिदं करोषि! ॥ ६५ ॥
दिदीक्षिपुस्त्वज्जनकोऽस्ति वत्स!, मज्जीवनं तेन विना कथं स्यात् ।
श्रुत्वेति मातुर्वचनं जगाद, बद्धाऽत्र तातं ननु रोधयिष्ये ॥ ६६ ॥
स तन्तुसूत्रेण पितुः क्रमाब्जा,-वावेष्ट्य प्रोचेऽम्ब! गमिष्यति क्व? ।
बद्धो मया सोऽपि तदा विदध्यौ, स्नेहानुबन्धोऽस्य विचित्ररूपः ॥ ६७ ॥

तत्सूत्रसंख्यामितहायनानि, स्यातव्यमित्येव स निश्चिकाय ।
जातास्तदा द्वादश सूत्रवन्धाः, ततस्स्थितो द्वादश वत्सरान् सः ॥ ६८ ॥
पूर्णप्रतिज्ञो रविसङ्ख्यवर्षा–न्ते स क्षपायां मनसा विदध्यौ ।
पापात्मना पूर्वभवे हृदैव, भग्नं व्रतं तत्फलमीदृशं मे ॥ ६९ ॥
त्यक्ता मयैतद्भवकेऽपि दीक्षा, हतोसि हा किं भविता परत्र ।
अद्यापि दीक्षाग्रहणेन पापं, संशोधये तीव्रतपोऽग्निना तत् ॥ ७० ॥
प्रातस्स्वपत्नीं तनयं विबोध्य, दीक्षां महात्मा जगृहे शिवार्थी ।
मार्गे मुनी राजगृहं प्रगच्छन्, सामन्ततत्पञ्चशतीर्ददर्श ॥ ७१ ॥
तान् चौर्यवृत्तीन् प्रतिबोध्य भद्रान्, प्रव्राज्य वीरप्रभुवंदनार्थम् ।
तैस्सार्द्धमार्द्रो मुनिपश्चचाल, गोशालकस्संमिलितश्च मार्गे ॥ ७२ ॥
अशेषकार्ये नियतिर्हि हेतु–रित्येव गोशालमतं निरस्य ।
स्वपौरुषस्थापकयुक्तिवर्गै–रार्द्रश्चकाराशु निरुत्तरं तम् ॥ ७३ ॥
आर्द्रो मुनिर्द्राक् समुपाजगाम, श्रीहस्तिनस्तापसकस्य कुट्याम् ।
तत्राश्रमस्थाः करिणं निहत्य, कालं महान्तं गमयन्ति तेन ॥ ७४ ॥

धान्यादिभोगाद् गजहिंसने तु, पापं लघीयो भवतीति बुद्ध्या ।
दुर्बुद्धयो मत्तमतङ्गजं हि, हन्तुं बबन्धुर्हततापसास्ते ॥ ७५ ॥
पुण्यैकमूर्त्त्यार्द्रमुनेः प्रभावात्, सद्यो विशीर्णा घनशृङ्खलापि ।
योगत्रयेणातुलभक्तिभावात्, मुक्तो गजेन्द्रस्तमृषिं ननाम ॥ ७६ ॥
करेण तत्पादयुगं स्पृशन् स, स्थित्वा कियत्कालमरण्यमेव ।
जगाम चात्यद्भुतवृत्तमेतत्, दृष्ट्वा चमत्कारमवापुरेते ॥ ७७ ॥
प्रबोधिताश्चार्द्रमहर्षिणा ते, श्रीवीरपार्श्वे प्रहितास्तदैव ।
गत्वाथ दीक्षामलभन्त एते, प्रभोः पदाब्जे विनयावनम्राः ॥ ७८ ॥
श्रीश्रेणिको हस्तिविमोक्षणं द्राक्, तत्तापसानां प्रतिबोधनं च ।
श्रुत्वाऽभयेनाथ सहाभ्यगच्छद्, मुनेः पदाब्जं प्रणनाम भक्त्या ॥ ७९ ॥
बद्धाञ्जलिर्हस्तिविमोक्षणं तत्, पप्रच्छ राजा मुनिमाह तं सः ।
न दुष्करस्स द्विपबन्धमोक्षः, किन्त्वामसूत्रैर्मम बन्धमोक्षः ॥ ८० ॥
आर्द्रर्षिराहाभयमन्त्रिणं मे, त्वं धर्मबन्धुः परमोपकारी ।
नाभेयमूर्त्तिः प्रहिता तदा नो, जातिस्मृतिस्स्यान्न तु मे कदाचित् ॥ ८१ ॥

अनार्यतापङ्कतले निमग्न-स्त्वयोद्धृतोऽहं करुणापरेण ।
तव प्रसादात्प्रभुधर्ममाप्य, प्राप्तस्सुचारित्रतपांसि बन्धो ॥ ८२ ॥
स श्रेणिकस्तं विधिवद्विनम्या-ऽभयोऽपि सद्यः स्वपुरं गतौ तौ ।
आराध्य मोक्षैकनिदानरत्न-त्रयं यथावार्द्रमुनिश्शिवं द्राक् ॥ ८३ ॥
इति विमलचरित्रं श्रीमुनेरार्द्रकस्य, स्मरति पठति भक्त्या भावनातोऽतिविज्ञः ।
दुरिततिमिरजालं द्राङ् निरस्यातिदीप्तं, त्रिभुवनसकलार्थज्ञानरत्नं समेति ॥ ८४ ॥

॥ अथ विस्तरजिज्ञासुजनोपकृतये श्रीसूर्ययशोनृपचरित्रं गद्यमयं मुनिजयानन्दविजयकृतम् ॥

श्रीऋषभदेवभगवच्च्यवनजन्मादिकल्याणकभूमित्वेन तीर्थभूताऽत एव भविनां सम्यग्दर्शननैर्मल्यविधायिनी चैत्यशिरस्संस्थस्फटिकरत्नकुम्भकिरणैरतीन्दुकिरणैर्विदारितज्योत्स्नातमिस्राभेदा रिपुगणैरयोध्याऽयोध्यानाम्याऽऽसीत् स्वर्गपुरीव पुरी, तत्रासीज्जगद्दारिद्र्यदावानलवारिकल्पस्तैस्तैरैश्वर्यसौन्दर्यधैर्यवीर्यादिगुणैस्सुत्रामप्रतिमो वीरव्रतः श्रीसूर्ययशोनामा भूपालः ।

"[1]राया आइच्चजसे, महाजसे अइबले अ बलभद्दे । बलविरिअ कत्तविरिए, जलविरिए दंडविरिए अ ॥ १ ॥

१. राजाऽऽदित्ययशा महायशा अतिबलश्च बलभद्रः । बलवीर्यः कार्तवीर्यो जलवीर्यो दण्डवीर्यश्च ॥ १ ॥

एएहिँ अद्धभरहं, सयलं भुत्तं सिरेण धरिओ अ। पवरो जिणिंदमउडो, सेसेहिँ न चाइओ वोढुं ॥ २ ॥"

इत्यावश्यकभाष्यवचनाद्देवेन्द्रोपनीतं श्रीनाभेयप्रभुप्रवरमुकुटं भरतादनु सोऽर्द्धभरतभोक्ता धृतवान्, अत एव श्रीऋषभप्रभुवत्सुरसेव्योऽभूत्। तस्याऽऽसीद् वरेण्यशीलादिगुणसम्पद्रमणीललामभूता राधावेधपणात्प्राप्ता विद्याधरकनकनृपपुत्री जयश्रीनाम्नी पट्टराज्ञी धर्मपत्नी, अपराण्यपि च त्रिंशत्सहस्राणि विद्याधरनरेन्द्रकुलजानि कलत्राण्यासन्, याभिस्समं देवाङ्गनाभिर्दोगुन्दकदेवचद्भोगलीलामनुभवन्नासीत्।

"जइ सव्वेसु दिणेसुं, पालह किरिअं तओ हवइ लट्ठं। जं पुण तहा न सक्कह, तह वि हु पालिज्ज पव्वदिणं ॥१॥
सव्वेसु कालपव्वे-सु पसत्थो जिणमए हवइ जोगो। अट्ठमिचउद्दसीसु अ, नियमेण हविज्ज पोसहिओ ॥२॥"

इति प्रभुवचनामृतपानासक्तस्स्पर्शमणिवन्मूढजनलोहं सुवर्णीकुर्वञ्जैनधर्मे कुशाग्रबुद्धिरहं त्रैलोक्यनायकप्रभूपदेशं श्रुत्वा किमपि भक्ष्यं यत्पर्वदिने बालाऽबलारण्यपक्षिणोऽप्यज्ञानभाजो नैवाऽश्नन्ति तत्पर्वदिन एव कथमाहारं करोमीति निश्चिन्त्य स चतुष्पर्व्यां यथाशक्ति तपसाऽष्टम्यां चतुर्दश्यां च विशिष्य सोपवासपौषधव्रतेन

१ एतैरर्द्धभरतं सकलं भुक्तं शिरसा धृतश्च। प्रवरो जिनेन्द्रमुकुटः शेषैर्न शकितो वोढुम् ॥ २ ॥

२ यदि सर्वेषु दिनेषु पालयथ क्रियां ततो भवति लष्टम्(श्रेष्ठम्)। यत्पुनस्तथा न शक्नुथ तथापि खलु पालयत(येत्) पर्वदिनम् ॥१॥ सर्वेषु कालपर्वसु प्रशस्तो जिनमते भवति योगः। अष्टमीचतुर्दश्योश्च नियमेन भवेत्पौषधिकः ॥ २ ॥

पर्वाराधनां करोति स्म, मेरुवन्निष्प्रकम्पस्य तस्य नैव सुरगणोऽपि तपोव्रतप्रतिज्ञाभङ्गं कारयितुं शक्त इत्येवं प्रशशंस तमतिप्रसन्नश्शक्रेन्द्रस्स्वसभाऽऽसीनः।

अथ सहृदयहृदयचमत्कारकृदेतद्वचः श्रुत्वोर्वशी विस्मयं प्राप्ता "नैवाहमेतत्कथमपि श्रद्दधे पर्वतात्खण्डशैलमिव तं व्रतप्रतिज्ञातोऽवश्यं पातयित्वाऽतिशयोक्तिरूपं शक्रेन्द्रवचनमन्यथा प्रकरोमीति" प्रतिज्ञां हृदये निधाय कराम्बुजे वीणां सम्परिगृह्य रम्भां सहचरीकृत्य श्रीसूर्ययशोनृपपरीक्षणार्थं सद्यो देवलोकान्मनुष्यलोकेऽवतीर्य सा श्रीनाभेयप्रभोर्गगनावलम्बिमनोज्ञचैत्येऽयोध्यासमीपोद्यानस्थे मुग्धजनचित्ताकर्षकात्यद्भुतरूपं विधाय स्वरमूर्च्छनाभिर्गातुं प्रावर्त्तत।

तद्गीतिनिरुपममाधुर्यरसाभिज्ञा बालाऽबलाऽरण्यप्राणिनोऽपि भित्तिचित्रिता इव तस्थुः, न च तदानीं कामपि चेष्टां केऽपि कर्त्तुं शक्ताः।

इतश्च श्रीसूर्ययशा नृपो वाहं वाहयित्वा पश्चाद् व्यावर्तमानः पथ्यऽपूर्वाह्लादैकहेतून् निरुपममाधुर्यरसोपेतान् गीतरसानऽश्रौषीत्। तदा नादेन मोहितास्सुखैकमग्ना वाजिनो नैव वेगपरा बभूवुः, न च गजा गतिपरा अभूवन्, पत्तयोऽपि नैवैकपदमप्यग्र उत्थापयितुं शक्ताः, इत्थं स्वकर्तव्याऽचलं बलं समवलोक्य पार्थिवः सादरं सचिवमुवाच, मन्त्रिन्! पश्य पश्याऽऽश्चर्यं, जगत्यस्मिन् नादोऽद्वितीयसुखैकहेतुभूतोऽमृतमप्यधरीकरोति, यत्प्रभावादज्ञानभाजः पशुपक्षिणो मदश्वादयश्च तत्राऽऽसक्तचित्ता भवन्तीत्यत्र किन्तु वक्तव्यं, किन्तु

ज्ञानभाजोऽपि देवदानवमानवेन्द्रा वशीभवन्ति, ततो वयमपि तत्र चैत्ये गत्वा श्रीऋषभप्रभुं नमस्कृत्याऽमृत-
रसातिशायितज्ञेयरसास्वादमास्वादयामहे, इत्थं सचिवेन सह विचार्य भूपालस्तज्ज्ञानमोहितो मन्त्रिसैनिकादि-
परिवारयुतो युगादिजिनचैत्याभ्यन्तरे जगाम, स्फुरद्दीप्रकान्ती कामभार्ये इव ते विलोक्य कामबाणैर्विद्धो मनसि
चिन्तयामास "एते कस्य पुण्यमूर्त्तेर्भोगाय भविष्यतः" इत्यालोच्य महीपालस्तयोश्चक्षुषी क्षिपन् युगादिप्रभु-
पादपद्मप्रणामं कृत्वा चैत्याद्बहिर्निःसृत्य बलानके निषण्णो मन्त्रिणं जगाद, मंत्रिन्! के इमे? कुत आगते!
किं चैतयोः कुलादिकम्! इति तत्र गत्वा पृष्ट्वा ज्ञात्वा निश्चित्य च मां ज्ञापय।

सचिवोऽपि नृपादेशप्रेरितस्सन् तत्समीपं गत्वा ते पृच्छति स्म सुधानुकारिवाचा, के युवां! को युवयोः
पतिः! किमर्थं चाऽऽगमनमत्र! तत्सर्वं समाशंसतं, सचिववचनं श्रुत्वा चन्दनाभाभिर्वाग्भिश्चैकोवाच,
आवां मणिचूडाख्यविद्याधरनृपपुत्रिके कुमारिके, आवयोराबाल्यकालात् कलाप्रवीणं मनो वीणासु रमते
क्रमेण यौवनं प्राप्ते "कस्येमे देये" इति चिन्तापरोऽस्मत्पिता बभूव, जगति स्वसदृशं पतिमलभमाने आवां
तच्चिन्तासागरात् पितरं व्यावर्तयावः, स्थाने स्थानेऽर्हच्चैत्यानां नमस्याभिर्निजं जन्म सफलं कुर्वहे, मन्त्रिन्!
क्व पुनर्मानवजन्म! प्रभुपादपूताऽधरीकृतालकापुर्ययोध्यापुरीयं तीर्थभूतेत्यतोऽत्र श्रीभरतनृपकारितं चैत्यं
समागत्य युगादिजिनं प्रणम्य सद्भक्तियोगादुपवीणयावः, तद्वचनं श्रुत्वा प्राह मन्त्री, युवयोस्सूर्ययशसा सह
सङ्गमः श्रेयानिति, असौ सर्वकलाप्रवीणस्सौम्याकृतिस्सद्गुणवांश्च, चन्द्रसङ्गमेन ज्योत्स्नारात्री यथा भातस्तथा

पर्वाराधनां करोति स, मेरुवन्निष्प्रकम्पस्य तस्य नैव सुरगणोऽपि तपोव्रतप्रतिज्ञाभङ्गं कारयितुं शक्त इत्येवं प्रशशंस तमतिप्रसन्नश्शक्रेन्द्रस्स्वसभाऽऽसीनः।

अथ सहृदयहृदयचमत्कारकृदेतद्वचः श्रुत्वोर्वशी विस्मयं प्राप्ता "नैवाहमेतत्कथमपि श्रद्दधे पर्वतात्खण्डशैलमिव तं व्रतप्रतिज्ञातोऽवश्यं पातयित्वाऽतिशयोक्तिरूपं शक्रेन्द्रवचनमन्यथा प्रकरोमीति" प्रतिज्ञां हृदये निधाय कराम्बुजे वीणां सरूपरिगृह्य रम्भां सहचरीकृत्य श्रीसूर्ययशोनृपपरीक्षणार्थं सद्यो देवलोकान्मनुष्यलोकेऽवतीर्य सा श्रीनाभेयप्रभोर्गगनावलम्बिमनोज्ञचैत्येऽयोध्यासमीपोद्यानस्थे मुग्धजनचित्ताकर्षकात्यद्भुतरूपं विधाय स्वरमूर्छनाभिर्गातुं प्रावर्त्तत।

तद्गीतिनिरूपममाधुर्यरसाभिज्ञा बालाऽबलाऽरण्यप्राणिनोऽपि भित्तिचित्रिता इव तस्थुः, न च तदानीं कामपि चेष्टां केऽपि कर्तुं शक्ताः।

इतश्च श्रीसूर्ययशा नृपो वाहं वाहयित्वा पश्चाद् व्यावर्तमानः पथ्यऽपूर्वाह्लादैकहेतून् निरुपममाधुर्यरसोपेतान् गीतरसानश्रौषीत्। तदा नादेन मोहितास्सुखैकमग्ना वाजिनो नैव वेगपरा बभूवुः, न च गजा गतिपरा अभूवन्, पत्तयोऽपि नैवैकपदमप्यग्र उत्थापयितुं शक्ताः, इत्थं स्वकर्तव्याऽबलं बलं समवलोक्य पार्थिवः सादरं सचिवमुवाच, मन्त्रिन्! पश्य पश्याऽऽश्चर्यं, जगत्यस्मिन् नादोऽद्वितीयसुखैकहेतुभूतोऽमृतमप्यधरीकरोति, यत्प्रभावादज्ञानभाजः पशुपक्षिणो मदश्वादयश्च तत्राऽऽसक्तचित्ता भवन्तीत्यत्र किमु वक्तव्यं, किन्तु

ज्ञानभाजोऽपि देवदानवमानवेन्द्रा वशीभवन्ति, ततो वयमपि तत्र चैत्ये गत्वा श्रीऋषभप्रभुं नमस्कृत्याऽमृतरसातिशायितद्गेयरसास्वादमास्वादयामहे, इत्थं सचिवेन सह विचार्य भूपालस्तद्गानमोहितो मन्त्रिसैनिकादिपरिवारयुतो युगादिजिनचैत्याभ्यन्तरे जगाम, स्फुरद्दीप्रकान्ती कामभार्ये इव ते विलोक्य कामबाणैर्विद्धो मनसि चिन्तयामास "एते कस्य पुण्यमूर्त्तेर्भोगाय भविष्यतः" इत्यालोच्य महीपालस्तयोश्चक्षुषी क्षिपन् युगादिप्रभुपादपद्मप्रणामं कृत्वा चैत्याद्बहिर्निःसृत्य बलानके निषण्णो मन्त्रिणं जगाद, मंत्रिन्! के इमे? कुत आगते! किं चैतयोः कुलादिकम्! इति तत्र गत्वा पृष्ट्वा ज्ञात्वा निश्चित्य च मां ज्ञापय।

सचिवोऽपि नृपादेशप्रेरितस्सन् तत्समीपं गत्वा ते पृच्छति स्म सुधानुकारिवाचा, के युवां! को युवयोः पतिः! किमर्थं चाऽऽगमनमत्र! तत्सर्वं समाशंसतं, सचिववचनं श्रुत्वा चन्दनाभाभिर्वाग्भिश्चैकोवाच, आवां मणिचूडाख्यविद्याधरनृपपुत्रिके कुमारिके, आवयोराबाल्यकालात् कलाप्रवीणं मनो वीणासु रमते क्रमेण यौवनं प्राप्ते "कस्येमे देये" इति चिन्तापरोऽस्मत्पिता बभूव, जगति स्वसदृशं पतिमलभमाने आवां तच्चिन्तासागरात् पितरं व्यावर्तयावः, स्थाने स्थानेऽर्हच्चैत्यानां नमस्याभिर्निजं जन्म सफलं कुर्वहे, मन्त्रिन्! क्व पुनर्मानवजन्म! प्रभुपादपूताऽधरीकृतालकापुर्ययोध्यापुरीयं तीर्थभूतेत्यतोऽत्र श्रीभरतनृपकारितं चैत्यं समागत्य युगादिजिनं प्रणम्य सद्भक्तियोगादुपवीणयावः, तद्वचनं श्रुत्वा प्राह मन्त्री, युवयोस्सूर्ययशसा सह सङ्गमः श्रेयानिति, असौ सर्वकलाप्रवीणस्सौम्याकृतिस्सद्गुणवांश्च, चन्द्रसङ्गमेन ज्योत्स्नारात्री यथा भातस्तथा

पर्वाराधनां करोति स, मेरुवन्निष्प्रकम्पस्य तस्य नैव सुरगणोऽपि तपोव्रतप्रतिज्ञाभङ्गं कारयितुं शक्त इत्येवं प्रशशंस तमतिप्रसन्नदृशक्रेन्द्रस्वसभाऽऽसीनः।

अथ सहृदयहृदयचमत्कारकृदेतद्वचः श्रुत्वोर्वशी विस्मयं प्राप्ता "नैवाहमेतत्कथमपि श्रद्दधे पर्वताद्गण्डशैलमिव तं व्रतप्रतिज्ञातोऽवश्यं पातयित्वाऽतिशयोक्तिरूपं शक्रेन्द्रवचनमन्यथा प्रकरोमीति" प्रतिज्ञां हृदये निधाय कराम्बुजे वीणां सम्परिगृह्य रम्भां सहचरीकृत्य श्रीसूर्ययशोनृपपरीक्षणार्थं सद्यो देवलोकान्मनुष्यलोकेऽवतीर्य सा श्रीनाभेयप्रभोर्गगनावलम्बिमनोज्ञचैत्येऽयोध्यासमीपोद्यानस्थे मुग्धजनचित्ताकर्षकात्यद्भुतरूपं विधाय स्वरमूर्च्छनाभिर्गातुं प्रावर्त्तत।

तद्गीतिनिरुपममाधुर्यरसाभिज्ञा बालाऽबलाऽरण्यप्राणिनोऽपि भित्तिचित्रिता इव तस्थुः, न च तदानीं कामपि चेष्टां केऽपि कर्तुं शक्ताः।

इतश्च श्रीसूर्ययशा नृपो वाहं वाहयित्वा पश्चाद् व्यावर्तमानः पथ्यऽपूर्वाह्लादैकहेतून् निरुपममाधुर्यरसोपेतान् गीतरसानश्रौषीत्। तदा नादेन मोहितास्सुखैकमग्ना वाजिनो नैव वेगपरा बभूवुः, न च गजा गतिपरा अभूवन्, पत्तयोऽपि नैवैकपदमप्यग्र उत्थापयितुं शक्ताः, इत्थं स्वकर्तव्याऽवलं बलं समवलोक्य पार्थिवः सादरं सचिवमुवाच, मन्त्रिन्! पश्य पश्याऽऽश्चर्यं, जगत्यस्मिन् नादोऽद्वितीयसुखैकहेतुभूतोऽमृतमप्यधरीकरोति, यत्प्रभावादज्ञानभाजः पशुपक्षिणो मदश्वादयश्च तत्राऽऽसक्तचित्ता भवन्तीत्यत्र किमु वक्तव्यं, किन्तु

ज्ञानभाजोऽपि देवदानवमानवेन्द्रा वशीभवन्ति, ततो वयमपि तत्र चैत्ये गत्वा श्रीऋषभप्रभुं नमस्कृत्याऽमृत-रसातिशायितज्ञेयरसास्वादमास्वादयामहे, इत्थं सचिवेन सह विचार्य भूपालस्तज्ज्ञानमोहितो मन्त्रिसैनिकादि-परिवारयुतो युगादिजिनचैत्याभ्यन्तरे जगाम, स्फुरद्दीप्रकान्ती कामभार्ये इव ते विलोक्य कामबाणैर्विद्धो मनसि चिन्तयामास "एते कस्य पुण्यमूर्त्तेर्भोगाय भविष्यतः" इत्यालोच्य महीपालस्तयोश्चक्षुषी क्षिपन् युगादिप्रभु-पादपद्मप्रणामं कृत्वा चैत्याद्बहिर्निःसृत्य बलानके निषण्णो मन्त्रिणं जगाद, मंत्रिन्! के इमे? कुत आगते! किं चैतयोः कुलादिकम्! इति तत्र गत्वा पृष्ट्वा ज्ञात्वा निश्चित्य च मां ज्ञापय।

सचिवोऽपि नृपादेशप्रेरितस्सन् तत्समीपं गत्वा ते पृच्छति स्म सुधानुकारिवाचा, के युवां! को युवयोः पतिः! किमर्थं चाऽऽगमनमत्र! तत्सर्वं समाशंसतं, सचिववचनं श्रुत्वा चन्दनाभाभिर्वाग्भिश्चैकोवाच, आवां मणिचूडाख्यविद्याधरनृपपुत्रिके कुमारिके, आवयोराबाल्यकालात् कलाप्रवीणं मनो वीणासु रमते क्रमेण यौवनं प्राप्ते "कस्येमे देये" इति चिन्तापरोऽस्मत्पिता बभूव, जगति स्वसदृशं पतिमलभमाने आवां तच्चिन्तासागरात् पितरं व्यावर्तयावः, स्थाने स्थानेऽर्हच्चैत्यानां नमस्याभिर्निजं जन्म सफलं कुर्वहे, मन्त्रिन्! क्व पुनर्मानवजन्म! प्रभुपादपूताऽधरीकृतालकापुर्ययोध्यापुरीयं तीर्थभूतेत्यतोऽत्र श्रीभरतनृपकारितं चैत्यं समागत्य युगादिजिनं प्रणम्य सद्भक्तियोगादुपवीणयावः, तद्वचनं श्रुत्वा प्राह मन्त्री, युवयोस्सूर्ययशसा सह सङ्गमः श्रेयानिति, असौ सर्वकलाप्रवीणस्सौम्याकृतिस्सद्गुणवांश्च, चन्द्रसङ्गमेन ज्योत्स्नारात्री यथा भातस्तथा

भवत्यौ सूर्ययशस्सङ्गमेन सादृश्याद्धास्यतः, स्वाधीनस्स भवद्वचनं नैवाऽन्यथा करिष्यतीत्येवमाग्रहे कृते मन्त्रिणा ते कन्यके तत्प्रेमवशाकृष्टे चैत्याद् बहिराजग्मतुः, तदैव च तेषां करपीडनं सञ्जातम् ।

तत्प्रीतिरसाकृष्टस्सूर्ययशा नृपो विस्मृतान्यकृत्यो विविधान् भोगान् भुञ्जानस्समयं सुखेन यापयामास । अथैकदा सूर्ययशसा सह वातायने क्रीडां कुर्वन्त्यौ ते कपटस्त्रियौ "भो लोकाः! श्वोऽष्टमीपर्व भवितेति पौषधादिधर्मकरणैकचित्ताः प्रमादमवधूय यूयं भवते"ति पटहोद्घोषणामश्रौष्टाम्, तदानीं विज्ञायाऽवसरं सादरोर्वशी भम्भावादनकारणमऽजानतीव नृपतिमपृच्छत्, नृपः प्राह शृणु प्रिये! तत्कारणं, तातपादेन भगवता चैत्राश्विनाष्टाह्निकाद्वयचतुर्मासीत्रयपर्युषणाख्यपर्ववद्विशिष्याष्टमी चतुर्दशी चाऽऽराधनीयत्वेनोक्ता, तत्र कोऽपि सावद्यव्यापारो नैव कर्त्तव्यः किन्तु विशिष्टपौषधव्रतादिशुभधर्मक्रियैव कर्तव्या, उक्तञ्च

"[1]चाउद्दसट्ठमुद्दिट्ठ-पुण्णिमासु चउसु पव्वेसु । उम्मुक्कमणिसुवण्णो, धण्णो चिय पोसहं कुणइ ॥१॥" इति॥

शुभक्रियाराधनेन या रात्रिर्व्यतीयते सैव सफला नाऽन्या, उक्तञ्च सिद्धान्ते—

"[2]जा जा वच्चइ रयणी, न सा पडिनियत्तइ । अहम्मं कुणमाणस्स, अहला जंति राइओ ॥ १ ॥

१ चतुर्दश्यष्टम्युद्दिष्टपूर्णिमासु चतुर्षु पर्वसु । उन्मुक्तमणिसुवर्णो धन्य एव पौषधं करोति ॥ १ ॥

२ या या व्रजति रजनी न सा प्रतिनिवर्तते । अधर्मं कुर्वाणस्याऽफला यान्ति रात्रयः ॥ १ ॥

जा जा वच्चइ रयणी, न सा पडिनियत्तइ । धम्मं तु कुणमाणस्स, सफला जंति राइओ ॥ २ ॥" इति ॥
सप्तम्यां त्रयोदश्यां चाऽज्ञलोकप्रबोधाय भामिनि ! मदादेशादियं हि पटहोद्घोषणा क्रियते । अथोर्वशी
तद्वचनं निशम्य मायामयन्धे चतुरा विस्मयमादधाना नृपसंमोहनाय प्रोवाच, हे राजन् ! अहो भाग्यलब्धं
मनुष्यत्वं महद्राज्यं नवयवः कान्तं वपुश्च कष्टकारितपोभिः कथं विडम्ब्यते त्वया मुग्धजनेनेव, भुङ्क्ष्व
सौख्यं यथेच्छं, राज्यविलासी भव, क्व पुनर्मानवो भवः ? क पुना राज्याऽपूर्वसुखं ?, अन्यथा भवतां पश्चा-
त्तापो भविष्यति ।

निष्ठुरवचनश्राविण्यास्तस्यास्तत्त्रपुनिभं वचः श्रुत्वा नृपतिर्जगाद, रे रेऽधमे ! पापिष्ठे ! धर्मविरुद्धमेतद्वचो
ब्रवीषि, विद्याधरवंशयोग्यं नैतद्, धिक् ते चातुर्यं मनुष्यजन्म रूपं वयःकुलादिकं, यतस्त्वया सर्वसम्पत्ति-
करं पर्वसंराधनं निषिध्यते, तत्तपः कः कृतज्ञो नाऽऽराधयेद्, यतो जन्म पावनं स्यात्, अतो मे शरीरे
यावत्प्राणास्तावच्चैव तातपादयुगादीशोद्दिष्टमुत्तमं पर्व विना तपो वृथा कुर्वे,
"छिज्जउ सीसं अह होउ, बंधणं चयउ सव्वहा लच्छी । पडिवन्नपालणे स-प्पुरिसाणं जं होइ तं होउ ॥ १ ॥"
इति महर्षिवचनं च प्रतिज्ञाततपस्त्यागेन नैवाऽन्यथा करोमि ।

१ या या व्रजति रजनी न सा प्रतिनिवर्तते । धर्मं तु कुर्वाणस्य सफला यान्ति रात्रयः ॥ २ ॥
२ छिद्यतु शीर्षमथ भवतु बन्धनं त्यजतु सर्वथा लक्ष्मीः । प्रतिपन्नपालने सत्पुरुषाणां यद्भवति तद्भवतु ॥ १ ॥

अथोर्वशी क्रोधाकुलनृपवचनं श्रुत्वा रुष्टा मोहमायां विदधती पुनर्वाचमुवाच, स्वच्छन्दचारी नृपतिः पितृवाक्यविमुखीभ्यां न प्राग्वृतः, अधुना तु पूर्वकर्मविपाकाद्वृतस्त्वं, तेनाऽतिदीने परिवञ्चिते स्वः, शीलात्संसारसुखाच परिभ्रष्टे स्वः, अतो मे चितायामेव मरणं भद्रमस्तु, अथैवंविधमुर्वशीवाक्यं कर्णकटु श्रुत्वा जगाद, यत्पर्वाराधनीयत्वेन ताततातेन प्रोक्तं तातेन चाऽऽराधितं तदेव पर्व तत्कुले जातोऽहं कथं परित्यजामि!, प्रयातु राज्यमथवा कृतान्तो मच्छिरश्छिनत्तु सहसा, तथापि नैव कण्ठगतेऽपि प्राणे मनाग्धर्मान्मतिं दूरीकरोमि।

"[1]अलसायंतेणा वि स-ज्जणेण जे अक्खरा समुल्लविया। ते पथ्थरटंकुक्की-रियव्व नहु अन्नहा हुंति ॥ १ ॥"

इति महर्षिवचनाद्धास्येन प्रमादेन वोक्तं नैव सज्जनोऽन्यथा कुरुते, अहमप्यप्रमादभावेनैव तदानीं कृतं तपःप्रतिज्ञावचनं तत्परित्यागे महापापं जानन् कथमन्यथा करोमि? ततः कृशाङ्गि! कोशं गजाश्वादींश्च राज्यं च निखिलं गृहाण, न च तथाऽनन्तदुःखमूलमधर्मं पर्वनाशनरूपं कारय!।

कोपारुणाक्षी सोर्वशी प्रोवाच–हे राजन्! "त्वद्वचनं नैव वितथं कुर्वे" इति त्रैलोक्यनायकप्रभुसमक्षं कृतां प्रतिज्ञां विद्वत्सभामध्ये परित्यजन् किं न लज्जसे?, तिरस्कारकृदेतद्वाक्यं श्रुत्वा चिन्ताभराक्रान्तो नृपो भूयो जगाद, हे प्रिये! यथेष्टमन्यन्मार्गय, न च पर्वभङ्गं कारय, श्रुत्वोर्वशी तद्व्रतनिश्चयार्थमीषत्स्मित्वा जगाद, राजन्! यदि पर्वभङ्गं न कुरुषे तर्हि युगादिजिनचैत्यं पातय द्राक्, श्रुत्वा तत्पापवचनं तेन हृद्ये दिवज्रेणेव हतो

१ अलसायमानेनाऽपि सज्जनेन यान्यक्षराणि समुल्लपितानि। तानि प्रस्तरटङ्कोत्कीर्णानीव न खल्वन्यथा भवन्ति ॥ १ ॥

धर्मैकधीरो महीन्द्रस्सम्मूर्च्छितो भुवि पपात, तदानीं तत्र हाहेति रवोऽतिशोकाकुलं राजकुलं च बभूव, सचिवादेशाच्चन्दनाद्यैः कृतोपचारः प्राप्तचैतन्यः सूर्ययशा नृपस्ताम्रास्यो जगाद, रे रेऽधमे ! चाण्डालकुलोत्पन्ना त्वं नैव विद्याधरसुता, कथमन्यथैवं पापवचनं ब्रूषे ? त्वं जीवन्त्यपि मृतैव, यतः कोऽपि नरः पापं कुर्वन् कारयंश्च श्वसन्नपि भस्त्रेव किं जीवति ! राज्यप्राणादिकं सर्वं प्रयातु, न च तथापि मनसाऽपि चैत्यभङ्गं प्रकुर्वे, प्रयाचतामन्यद् मनोऽभीप्सितं ते, उर्वशी गतत्रपा नम्राङ्गी भूयोऽपि जगाद, स्वपुत्रशिरोऽसिना स्वयं छित्त्वा करतले मम प्रदेहि त्वं, नरेन्द्रो धर्मैकवीरः पीयूषवाग्भिर्निजगाद, मत्सूनुर्मज्जन्मेति मे निर्यद्बहलरुधिरधारं शिरो गृहाण कराम्बुजे, तन्मात्रेण प्रसीद प्रमदे ! इत्थं समुच्चार्य प्रजापालोऽसिं यावन्निष्कृपं स्वशिरो भेत्तुं जग्राह तावत्तया स्वप्रभावमहिम्नाऽसिधारा सद्यः कुण्ठिता कृता, वर्धिष्णूत्साहस्सोऽन्यकृपाणं गृहीतवान् तस्याऽपि धारां सा स्वयत्नेन बबन्ध, न च तथापि धर्मवीरस्य तस्य महात्मनः सत्त्वस्य धाराप्रतिबन्धे शक्ता, यं यं खड्गं गृह्णाति स तं तं कुण्ठितमकरोत्सा, मेरुवन्निष्प्रकम्पो धर्मवीरो नृपः केनाऽप्युपायेन मनागपि नैव स्वसत्त्वाच्चलितस्तदा स्वस्वरूपं प्रकटीकृत्य "जय सत्त्ववतां धुर्य ! जय व्रतप्रतिज्ञापालनैकवीर ! जय जय त्वं" इत्यूचतुस्ते, सत्कृत्याऽऽदरादहो ! सत्त्वमहो ! धैर्यमहो ! मानसनिश्चयस्तव, यदसिना हन्यमानोऽपि नाऽत्यजो मनाक् स्वव्रतं "तेजस्विनः सुखमसूनपि सन्त्यजन्ति, सत्यव्रतव्यसनिनो न पुनः प्रतिज्ञाम्," इत्यपि वचनं सत्यीकृतं सत्यव्रतेन भवतेत्यादिप्रशंसां यावच्चक्रतुस्तावत् स्वर्गाच्छक्रेन्द्रोऽपि हर्षोत्कर्षाज्जय जय त्वं धर्म-

अथोर्वशी क्रोधाकुलनृपवचनं श्रुत्वा रुष्टा मोहमायां विदधती पुनर्वाचमुवाच, स्वच्छन्दचारी नृपतिः पितृवाक्यविमुखीभ्यां न प्राग्वृतः, अधुना तु पूर्वकर्मविपाकाद्वृतस्त्वं, तेनाऽतिदीने परिवञ्चिते स्वः, शीलात्संसारसुखाच्च परिभ्रष्टे स्वः, अतो मे चितायामेव मरणं भद्रमस्तु, अथैवंविधमुर्वशीवाक्यं कर्णकटु श्रुत्वा जगाद, यत्पर्वाराधनीयत्वेन ताततातेन प्रोक्तं तातेन चाऽऽराधितं तदेव पर्व तत्कुले जातोऽहं कथं परित्यजामि!, प्रयातु राज्यमथवा कृतान्तो मच्छिरश्छिनत्तु सहसा, तथापि नैव कण्ठगतेऽपि प्राणे मनागधर्मान्मतिं दूरीकरोमि।

"[1]अलसायंतेणा वि स-ज्जणेण जे अक्खरा समुल्लविया। ते पथ्थरटंकुक्की-रियव्व नहु अन्नहा हुंति॥ १॥"

इति महर्षिवचनाद्धास्येन प्रमादेन वोक्तं नैव सज्जनोऽन्यथा कुरुते, अहमप्यप्रमादभावेनैव तदानीं कृतं तपःप्रतिज्ञावचनं तत्परित्यागे महापापं जानन् कथमन्यथा करोमि? ततः कृशाङ्गि! कोशं गजाश्वादींश्च राज्यं च निखिलं गृहाण, न च तथाऽनन्तदुःखमूलमधर्मं पर्वनाशनरूपं कारय!।

कोपारुणाक्षी सोर्वशी प्रोवाच-हे राजन्! "त्वद्वचनं नैव वितथं कुर्वे" इति त्रैलोक्यनायकप्रभुसमक्षं कृतां प्रतिज्ञां विद्वत्सभामध्ये परित्यजन् किं न लज्जसे?, तिरस्कारकृदेतद्वाक्यं श्रुत्वा चिन्ताभराक्रान्तो नृपो भूयो जगाद, हे प्रिये! यथेष्टमन्यन्मार्गय, न च पर्वभङ्गं कारय, श्रुत्वोर्वशी तद्वृतनिश्चयार्थमीपत्स्मित्वा जगाद, राजन्! यदि पर्वभङ्गं न कुरुषे तर्हि युगादिजिनचैत्यं पातय द्राक्, श्रुत्वा तत्पापवचनं तेन हृद्देदिवज्रेणेव हतो

[1] अलसायमानेनाऽपि सज्जनेन यान्यक्षराणि समुल्लपितानि। तानि प्रस्तरटङ्कोत्कीर्णानीव न खल्वन्यथा भवन्ति॥ १॥

धर्मैकवीरो महीन्द्रस्सम्मूर्च्छितो भुवि पपात, तदानीं तत्र हाहेति रवोऽतिशोकाकुलं राजकुलं च बभूव, सचिवादेशाचन्दनाद्यैः कृतोपचारः प्राप्तचैतन्यः सूर्ययशा नृपस्ताम्रास्यो जगाद, रे रेऽधमे! चाण्डालकुलोत्पन्ना त्वं नैव विद्याधरसुता, कथमन्यथैवं पापवचनं ब्रूषे? त्वं जीवन्त्यपि मृतैव, यतः कोऽपि नरः पापं कुर्वन् कारंधम श्वसन्नपि भस्त्रेव किं जीवति! राज्यप्राणादिकं सर्वं प्रयातु, न च तथापि मनसाऽपि चैत्यभङ्गं प्रकुर्वे, प्रयाचतामन्यद् मनोऽभीप्सितं ते, उर्वशी गतत्रपा नम्राङ्गी भूयोऽपि जगाद, स्वपुत्रशिरोऽसिना स्वयं छित्त्वा करतले मम प्रदेहि त्वं, नरेन्द्रो धर्मैकवीरः पीयूषवाग्भिर्निजगाद, मत्सूनुर्मज्जन्मेति मे निर्यद्बहलरुधिरधारं शिरो गृहाण कराम्बुजे, तन्मात्रेण प्रसीद प्रमदे! इत्थं समुचार्य प्रजापालोऽसिं यावन्निष्कृपं स्वशिरो भेत्तुं जग्राह तावत्तया स्वप्रभावमहिम्नाऽसिधारा सद्यः कुण्ठिता कृता, वर्धिष्णूत्साहस्सोऽन्यकृपाणं गृहीतवान् तस्याऽपि धारां सा स्वबलेन बबन्ध, न च तथापि धर्मवीरस्य तस्य महात्मनः सत्त्वस्य धाराप्रतिबन्धे शक्ता, यं यं खड्गं गृह्णाति स तं तं कुण्ठितमकरोत्सा, मेरुवन्निष्प्रकम्पो धर्मवीरो नृपः केनाऽप्युपायेन मनागपि नैव स्वसत्त्वाचलितस्तदा स्वस्वरूपं प्रकटीकृत्य "जय सत्त्ववतां धुर्य! जय व्रतप्रतिज्ञापालनैकवीर! जय जय त्वं" इत्यूचतुस्ते, सत्कृत्याऽऽदरादहो! सत्त्वमहो! धैर्यमहो! मानसनिश्चयस्तव, यदसिना हन्यमानोऽपि नाऽत्यजो मनाक् स्वव्रतं "तेजस्विनः सुखमसूनपि सन्त्यजन्ति, सत्यव्रतव्यसनिनो न पुनः प्रतिज्ञाम्," इत्यपि वचनं सत्यीकृतं सत्यव्रतेन भवतेत्यादिप्रशंसां यावचक्रतुस्तावत् स्वर्गाच्छक्रेन्द्रोऽपि हर्षोत्कर्षाज्जय जय त्वं धर्म-

धुरन्धर! इत्याद्युच्चारयन् तन्मस्तके सुमानि विकिरन् समुपाजगाम, भ्रष्टप्रतिज्ञोर्वशी तेन शक्रेन्द्रेण सोपहासं निरीक्षिता सुवर्ण इव तस्मिन् किं पापश्यामिका लगतीत्यादितद्गुणान् शक्रपुरतो जगौ, शक्रोऽपि तस्मै किरीट-कुण्डलाङ्गदहारादीनि भूषणानि दत्वा नत्वा च स्वर्गं ययौ।

श्रीसूर्ययशा नृपोऽपि सुनीत्या धर्मैकनिष्ठो राज्यमपालयत्, भरताधिपतिश्रीभरतेशवच्छ्रीसङ्घयात्रां चाकारयत्, व्रतधारिश्रावकांश्च भोजयामास। अथैकदा मणिदर्पणेषु स्वं पश्यन् संसारासारतां भावयन् केवलज्ञानमासादितवान्, भुवि विहृत्य भव्यान् प्रतिबोध्याऽन्ते च भवोपग्राहिकर्मक्षयं कृत्वा मुक्तिनिलयं जगाम।

आकर्णयन्ति नृपसूर्ययशश्चरित्रं, ये धारयन्ति हृदयेऽथ तथाऽऽचरन्ति।
निःशेषकर्मनिचयान् परिमुच्य तेऽपि, शुद्धा भवन्ति गुरुदेववरप्रसादात्॥ १॥

इति न्यायवाचस्पति-शास्त्रविशारद-तपागच्छाचार्य-श्रीविजयदर्शनसूरिपादाब्जचञ्चरीकमुनि-जयानन्दविजयकृतं श्रीमदार्द्रकुमारचरित्रं श्रीसूर्ययशोनृपचरित्रं च समाप्तम्।